सा्ताहिक-संस्कृतस्य

# भाषाङ्कस्य परिशिष्टाङ्कः।

"भारतीले सरस्वती या वः सर्वा उपद्रुवे।
ता नश्चोदयत श्रिये"।



सम्पादकः—

कालीप्रसादशास्त्री

सं०

२९

# विषय-सूची।

—::❀::—::❀::—

—::o::o::—

## साहित्याङ्क-सूचना ।

श्रीमन्तो महानुभावाः पाठकमहोदयाः सम्प्रति भवतां करे राष्ट्रभाषाङ्कस्य परिशिष्टांकं विशेषाङ्करूपेण समर्प्य भाविविशेषाङ्कस्य सूचना कार्यालयेन दीयते । भाविविशेषाङ्कः "साहित्याङ्को भविष्यति । अस्य प्रकाशनाय कार्यालयोऽद्यत एव यतते यतोऽयमङ्कः विजयदशम्यवसरे सुप्रकाशितः स्यादेव, अस्मिन्नङ्के संस्कृतसाहित्यविषकगवेषणापूर्णलेखा भविष्यन्ति । अस्य विषयसूची कस्मिंश्चित्साधारणांके सद्य एव प्रकाशिता भविष्यति । आशाऽस्ति कार्यालयस्य कर्मणाऽनेन भवन्तः प्रसन्ना एव भविष्यन्ति। तथा लेखप्रेषणाय दत्तावधाना भविष्यन्ति । यैः परिशिष्टांके स्वलेखा न प्रेषिता ते प्रकाशितेऽस्मिन्नङ्केऽनुतप्स्यन्त्येव । साहित्यांक विषयक-विषयविशेषो यदि कस्यचित् महोदयस्य मनसि समुदयेत तदा तेन स्वसम्मतिः कार्यालये प्रेष्या एव । एवं कार्यालयस्तस्य कृतज्ञो भविष्यत्येवेति ।

अस्यामेव शताब्द्यां संस्कृतं राष्ट्रभाषा भवेदयमेव संस्कृतस्योद्देशः

महाविदुषा स्वर्गीय पं० कालीकुमारत्रिपाठिना प्रवर्तितस्य—

साप्ताहिकसंस्कृतस्य

# राष्ट्रभाषाङ्कस्य-परिशिष्टाङ्कः

यावद् भारतवर्षं स्याद् यावद् विन्ध्यहिमाचलौ ।
यावद् गङ्गा च गोदा च तावदेव हि संस्कृतम् ॥

वर्षः ८ | साकेतः, मङ्गलः फाल्गुनशुक्लपूर्णिमा १९९४ विक्रमाब्दे | सं० ११

ॐ

यो ब्रह्माणं विदधाति पूर्वं,
यो वै वेदांश्च प्रहिणोति तस्मै ।
तं ह देवमात्मबुद्धिप्रकाशं,
मुमुक्षुर्वै शरणमहं प्रपद्ये ॥

# श्रीनवदुर्गास्तवः ।

( ले० महामहोपाध्यायः श्रीदुर्गाप्रसादद्विवेदः
सरस्वतीपीठ-जयपुरम् )

कार्येण याऽनेकविधा भवन्ती, निवारयन्ती स्मरतां विपत्तीः ।
अपूर्व-कारुण्यरसार्द्रचित्ता, सा शैलपुत्री भवतु प्रसन्ना ॥
स्वर्गोऽपवर्गो नरकोऽपि यत्र, विभाव्यते दृक्कलया विविक्तम् ।
या चाऽद्वितीयाऽपि शिवद्वितीया, सा ब्रह्मचारिण्यवताद् भयेभ्यः ॥
पादौ धरित्री कटिरन्तरिक्षं, यस्याः शिरो द्यौ रुदितागमेषु ।
अन्यद् यथायोगमयोगदूरा, सा चन्द्रघण्टा घटयत्वभीष्टम् ॥
स्वराड् विराड् संहतिराडखण्डब्रह्माण्ड-भाण्डाकलनैकवीरा ।
पापार्ति-विध्वंसनसत्त्वकूष्मा-ण्डाव्यादपायादयदानशौण्डा ॥
द्वैमातुरत्वे द्विरदाननस्य, षाण्मातुरत्वे च कुमारकस्य ।
एकैव माता परमा मता या, सा स्कन्दमाता मुदमादधातु ॥
कतस्य गोत्रादथवा परस्मात्, किं वेतरस्मात् कथमेकिकैव ।
जातेति मायाह्वयतामिता या, कात्यायनी सा ममतां हिनस्तु ॥
कालोऽपि विश्रान्तिमुपेति यस्यां, काऽन्या कथा भौतिकविग्रहाणाम् ।
प्रपञ्च-पञ्चीकरणैकधात्री, सा कालरात्री निहताद् भयानि ॥
कालीकुलं श्री कुलमप्यपारं, कृष्णाद्युपासा प्रवणं यतश्च ।
साऽनन्तविद्या वितताऽवदाना, गौरी विदध्यादखिलान् पुमर्थान् ॥
गृणन्ति यां वेदपुराणसांख्य—योगागमा देवमहर्षयश्च ।
पुत्रान् प्रपौत्रान् सुधियः श्रियश्च, सा सिद्धिदा सिद्धकरी ददातु ॥

———

# संस्कृतविद्यया मुक्तिः ।

( ले० जगद्गुरुः श्रीशङ्कराचार्यमहाराजःकुम्भकोणम् )






रिवर्तनशीले सदैव परिवर्तनमेव दृश्यते। तादृशेऽस्मिन्संसारे परिवर्तनस्य पराकाष्ठा सर्वेषां दृष्टिगोचरी भूता एव वर्तते हन्त ! शोभनाशोभने परिवर्तनद्वैविध्ये द्वितीयं नितरां कष्ट-प्रदम् । एषैव दशा साम्प्रतं निखिलभाषाजनन्याः परमपावन्याः संस्कृतभाषायाः समुत्पन्ना । यद्यपि साम्प्रतमपि संस्कृत-विदुषां सं० पाठशालानां वा नास्त्यभावः । सन्त्यनेके विद्वांसः पाठशाला अपि सर्वत्र सुस्थापिता विद्यते, परमत्र पाठशालासु तेषु विद्वत्सु च पाश्चात्यसभ्यता इत्थमन्तः प्रविष्टा येन ते मातरमिव हितकर्त्रीम् भगवद्भक्तिमिव मुक्तिदात्रीमिमां संस्कृत-सरस्वतीं नावगच्छन्ति अनयैव संस्कृत-विद्यया मुक्तिर्भवितुमर्हति, साक्षात्कारेण परम्परया च । तत्राद्ये सम्यगवबुद्धस्य सम्यक् प्रयुक्तस्यैकस्यापिशब्दस्य प्रशंसां कुर्वता भगवता पतञ्जलिना स्वर्गे लोके च कामधुग् भवतीत्युक्तमतोऽत्र मुक्तिकामो मुक्तिमप्यश्नुते इत्युक्तं भवति ।

'मृत्यावसाने भवराजराजो मनागलक्ष्यां भवपञ्जवारम् । उद्धर्तुकामः सनकादिसिद्धमेवाद्धिमद्धै [illegible] "इत्युक्तेरेव-

गम्यते यदुद्धर्तुकामेनैव भगवता चन्द्रशेखरेण पाणिनये चतुर्दश संख्याके सूत्रे संनिविष्टं संस्कृतभाषाज्ञानैकसाधनं व्याकरणशास्त्रमुपदिष्टम्। यदि संस्कृत-भाषाज्ञानेनैव न मुक्तिश्चेदुद्धारशब्दस्य कोऽर्थः स्यात्। उद्धारमुक्तिशब्दौ पर्यायवाचिनौ स्तः। अत उद्धार-शब्दस्यात्र मुक्तिरेव प्राधान्येनार्थः, अत्र मुक्तिदात्री संस्कृतसरस्वती एव शङ्करस्य मतौ। यदि च "अथ व्याकरणाध्ययनेन किं साध्यम्? अर्थधर्मकाममोक्षाश्चत्वारो वर्गाः; इति लघुभाष्योक्तेश्चतुर्णां प्रत्यनीकेभ्य उद्धारणमुद्धारशब्दार्थः, तत्रापि संस्कृतज्ञानस्य मोक्षदातृत्वं स्पष्टमेवेति।

रामकृष्णयोर्नामनी संस्कृत-भाषयोप-निबद्धे तयोः स्मरणेन सर्वैरेवाचार्यैर्मुक्तिः स्वीकृता, यथा सनत्कुमारसंहितायां "रामरामेतिजना ये जपन्ति च सर्वदा तेषां भुक्तिश्च मुक्तिश्च भवेतां नैव संशयः"। इत्यादिवाक्यैः स्फुटी भवती तत्। "वेदाभ्यासरतो नित्यं नरः मुक्तिमथाश्नुते" इत्युक्तौ व्यासदेवेन वेदस्य संस्कृतमयस्याभ्यासेनैव मुक्तिः प्रतिपादिता। अभ्यासश्चात्र स्वरादीनामेवेति।

भगवान् श्रीकृष्णचन्द्रः सामवेदं स्वं स्वरूपं मन्यते। यथा "वेदानां सामवेदोऽस्मि" भगवद्स्वरूपज्ञानादेव मुक्तिर्भवति। यथा "यो मामजमनादिं च सर्वगं प्रकृतेः परम् कारणं सर्वभूतानां वेत्ति मुक्तियथाश्नुते" इति। सामवेदस्य गानप्रधानत्वेन सामगानमेव भगवत्स्वरूपज्ञानं तेनैव मुक्तिरभिव्यञ्जिता भगवता। एवं तन्त्रयुक्तिं प्रतिपादयता महर्षिणा सुश्रुतेन "यो ह्येता विधिवद् वेत्ति दीपीभूतास्तु बुद्धिमान्। स पूजार्हः" इत्युक्तम्। तन्त्रयुक्तयश्च वाक्यार्थज्ञानमात्रे पर्यवसीयन्ते यथा तत्रैव "अमासां युक्तीनां किं प्रयोजनमित्युच्यते, वाक्यप्रयोजनमर्थ-प्रयोजनं चेति"। इत्थं वाक्यार्थयोर्ज्ञाने हेतुभूतानां युक्तीनां ज्ञानादेव पूजार्हत्वं प्रतिपादितम्। ये च लोके शास्त्रसम्मतेन पूजार्हा तेऽवश्यं मुक्तिभाजः। प्रतिपादितं चैव मेव पुराणेषु "येलोके पूज्यते सर्वैः स्वगुणैः

शास्त्रसम्मतैः। विधूय ते कर्मभवं भवं याति परांगतिम्" । लोके-ऽप्यवलोक्यते-यस्योपरि सर्वे जनाः प्रसन्ना वर्तन्ते यस्य निधने च परितापयुता भवन्ति, तत्रेत्थं वदन्ति जना यदयं सर्वप्रियोऽवश्यं परां गतिमाप्स्यतीति ।

अथ च परंपरया संस्कृत-भाषया मुक्तिः प्रतिपाद्यते-वेदा-द्यादिशास्त्रप्रतिपादितविधिना मुक्तिः प्रतिपादिता । तच्च कथं-चिदपि संस्कृतभाषाज्ञानमन्तरा न भवति । यतस्ते विषया मुक्तिप्रदा यका महर्षिभिस्तपोबलैः संस्कृतभाषामयेभ्यो वेदेभ्यो निष्कास्य स्वे स्वे निबन्धे तस्यामेव संस्कृतभाषायां निबद्धाः तेषां भाषान्तरेषु अनुवादकरणमपि केवलं-प्रयास एवेति, यतस्ते पारिभाषिकाः शब्दाः कथमनुवादेन भाषान्तरे नेयाः स्युः। नहि कस्यां चिदपि भाषायां तेषां प्रतिशब्दाः विद्यन्ते। विषक्रमिन्यायेन ते संस्कृत-भाषायामेव-बोध्याः भवन्ति। यथा संस्कृतमन्नं तृप्तये संस्कृतमौषधं रोगवि-निवृत्तये संस्कृता लाक्षा भूषणाय एवमेव संस्कृत-भाषामुक्तये भवे-दित्यत्र न संदेहः कर्तव्यः।

यस्यां भाषायां मुक्तिरप्यभिस्यूताः तस्या अधिकत्वं श्रेष्ठ-त्वं च कस्य प्रति-पाद्येत । साचेयं संस्कृतविद्भिरेवविद्वद्भिरुपेक्षि-तास्यात्तदान्येषां भाषान्तरविदां विदुषां किमु वक्तव्यं स्यात्। अतः सर्वैरेवास्माभिरस्या भाषाया प्रचारायकटिबद्धैरेव भवितव्यमन्यथा कथमभ्युदयोऽस्माकं स्याद्, शिवाय भवताद्धरिरिति विरम्यते ।

# सम्प्रदायाचार्याणां संस्कृतेऽनुरागः।

ले०—रामानुजाचार्यदेवनायकाचार्यः शर्म्मा।





श्रीमन्तो विदांकुर्वन्तु पाठकाः! यदस्माकं पूर्वजानां सम्प्रदायाचार्याणां संस्कृते कीदृशी प्रीतिरासीत्। श्रीमच्छङ्कराचार्यस्य वृत्तं केनाज्ञातम् भगवताऽनेन कोऽपि ग्रन्थोभाषान्तरे प्रणीतः? नहि अपि तु सर्वेऽस्य ग्रन्थाः संस्कृत एव वर्तन्ते। इदं तु वक्तुं नैव शक्यते तदानीं नान्या काऽपि भाषा प्रचलिताऽऽसीदिति। नहि सर्वेषां व्यवहारिकीयं तदानीन्तनानाममरगीरासीत्, किन्तु आसन्नवश्यमेव तत्तत्प्रान्तीयानां भाषा अन्याः। परमेतस्य संस्कृतेऽतिशयानुरागतया ता नेष्टा अभूवन्। कुमारिलशिष्यस्य मण्डनमिश्रस्य किमु वक्तव्यं यस्य शुकादयोऽपि संस्कृतवादिन आसन् यथा शङ्करदिग्विजये "स्वतः प्रमाणम् परतः प्रमाणं कीराङ्गना यत्र गिरं गिरन्ति"। इत्यादि। अनेन मण्डनमिश्रेण संस्कृतस्य सेवायां लावण्ययौवनसम्पन्ना शरदिन्दुनिभानना वयसाऽरुन्धतीव साक्षात् भारतीव भारती अपि स्वपत्नी प्रस्थिता च भगवता शङ्करेण सार्धं विजयिना।

अनयोः पूर्वमेव संस्कृत-भाषामयानां वेदानामुद्धाराय कुमारिलभट्टेन कृतं कृत्यं स्मारं स्मारं हृदयं विदूयते। अयमेकदा पराजितैर्बौद्धैः प्रासादादच्युच्चुङ्गात्पातितोऽभवत्। पूर्वमयं बौद्धानां जैनानां च मन्तव्यमजानन् तान् न जेतुमशक्नोत्। अतोऽधर्मोऽयमेतदर्थं तुषाग्नौ प्रवेशो कर्तव्यो भविष्यति" इति जानन्नपि तेभ्यो तद्धर्मं शिक्षां गृहित्वा वेदोद्धाराय तान् पराजित्य प्रयागे तुषाग्नौ प्रविश्य शरीरं भस्मसात्कृतमिति नाविदितं प्रेक्षवताम् पूर्वेतिवृत्तविदुषाम्।

अनेन देशे देशे परिभ्रम्य संस्कृतवाण्याः प्रचाराय प्रतिभाशालिनो बालका आनीता महता परिश्रमेण शिक्षिताश्च कृताः। तेषु प्रभाकर इव साक्षात् विद्यामार्तण्डः प्रभाकरः परिचित एव तावत् भवतां धीमताम्।

श्रीमन्तो भवभयविध्वंसिनो विद्याविलासव्यसनिनो, भगवच्चरणारविन्दैकसेविनः सदसद्विज्ञानशालिनः। पूज्यपादारविन्दा अधरीकृताधर्मप्रचारमूला आचार्यपादाः श्रीरामानुजाचार्याः कां कां संस्कृतस्य कुदशां न सुधारितवन्तः। देशे २ ग्रामे२ पर्यटनं विधाय सनातनधर्मस्य जीवनाधारभूतायाः संस्कृत-भारत्या विविधविधिक्लेशान् मर्षयन्तोऽपि अतुलां सेवां कृतवन्तः संस्कृते महानुभावानामेतेषामपि कियानाग्रह इति "श्रीभाष्या" दिग्रन्थजात-विलोकनेनैव प्रतीयते।

श्री निम्बार्काचार्यः संस्कृत-साहित्ये समुज्वलमुखो मृतोऽपि जीवन्निव वर्तते। वेदान्तपारिजातसौरभनामकं ब्रह्मसूत्र भाष्यमेतस्य सांस्कृतजगतः श्रीवर्द्धक एवेति। वेदाद्रिष्वस्य परमोऽनुरागः स्वकृतेनाऽस्य श्लोकेन प्रमाणी भवति। "सर्वं हि विज्ञानमतो यथार्थकं श्रुतिस्मृतिभ्यो निखिलस्य वस्तुनः। ब्रह्मात्मकत्वादिति वेदविन्मतं, त्रिरूपताऽपि श्रुतिसूत्रसाधिता।" श्लोकेनानेन वेदादिषु परमास्थासोऽस्य स्फुटो भवति। एतस्य शिष्या

अपि आसन् संस्कृत-साहित्यसंवर्द्धकाः तेष्वेव श्रीनिवासाचार्यो वेदान्त-कौस्तुभस्य प्रणेता संस्कृतसेवी।

एवमे यादवप्रकाशः रामानुजस्वामिनः शिष्यः परमः संस्कृतप्रेमी। संस्कृत-भाषायामनुरागातिशयेनैवानेन "वैजयन्ती" कोषस्य रचनाऽकारि। यद्यपि अस्य विचारा रामानुजस्वामिना वेदान्तप्रदीपे खण्डिताः साम्प्रदायिकविचारेण तथापि संस्कृतानुरागिभिः संस्कृतस्यायमाचार्य एवेति सर्वमान्यः। श्रूयतेऽयं पुरोक्तस्वामिनः गुरुः पश्चाच्च शिष्यो बभूव।

अपरेऽपि ये खलु सम्प्रदायाचार्याः सर्वेऽपि ते संस्कृत-भारतीसमुपासका नेति न। यथा श्रीपद्माचार्यः, श्रीसुरेश्वराचार्यः, सर्वज्ञात्ममुनिः, भारतीतीर्थः, विद्यारण्यः, प्रकाशात्माचार्यः, चित्सुखाचार्यः, मध्वाचार्यः, वल्लभाचार्यः, श्रीनीलकण्ठाचार्यः, श्री चैतन्यमहाप्रभुः, श्रीकराचार्यः वलदेवविद्याभूषणः, इत्यादयो बहवः आचार्याः सम्प्रदायप्रवर्तका संस्कृतदेव्याः प्रवर्द्धका ग्रन्थप्रणेतारोऽभूवन्। एतेषां मतभेदो साम्प्रदायिकेषु भावेषु कामं चास्तु परमेते सर्वेऽपि सुरसरस्वतीसेवनावसरे ऐकमत्यमेवावलम्बन्ते। इत्थमाधुनिकैरपि संस्कृतभाषाविद्भिश्चैकमत्यं संस्कृत प्रचारेऽवश्यं कार्य्यम्। "संघे शक्तिः कलौ युगे" इत्युक्तेः सर्वैरप्यस्माभिर्विभिन्नमतवादिभिरपि संस्कृतभारत्याः सेवायामेकमत्या सम्प्रदायाचार्याणामिव सन्नद्धैर्भवितव्यम्। सम्प्रदायानामपि रक्षा प्रयत्नोऽकिञ्चित्कर एव। सर्वेऽप्यस्माकं ग्रन्थजातं भाषामेतां मूलीकृत्यैव वर्तन्ते अतो "छिन्ने मूले नैव शाखा न पत्रम्" इव भाषारक्षणं विना धर्माणां रक्षणं कदापि न सम्पद्यते। आशाऽस्ति तत्र भवन्तो। दत्तावधाना भविष्यन्ति। इति शम्।



# संस्कृतभाषात्वे लोकमङ्गलम् ।

( ले० श्रीवल्लभाचार्य–गोस्वामी–श्रीव्रजरत्नलाल-
महाराजः, सूरतम् )





इदं तु निश्चप्रचं यावद्देशे सर्वाङ्गीणा भाषा देशभाषा राष्ट्रभाषा न भवति तावदनेकविधानां विपदां प्रसारो देशस्य परिस्थित्यै दुर्निवारो जायते। प्रत्यहं नवसमाजनिर्माणं नवसभ्यताप्रचारः, अहमहमिकया नितांतं मतमतान्तराणां नावरोध्या प्रगतयो वर्धन्ते। एवं लोकस्य स्थितिः तरलतरङ्गततितरङ्गिण्यां महावाताहताया निर्वन्धकम्पनपरायाः नावः, स्थितिरिवोत्पद्यते। सैव सम्प्रति भारतवर्षस्येति समक्षमेवास्ति तावत्सुचेतसां भवताम्।

अतोऽत्र प्रश्न एष उत्पद्यते यदस्याः स्थितेः सुधाराय कया भाषया राष्ट्रभाषया भाव्यं, कस्यां लोकमङ्गलानि स्यूतानि सूत्रे मणिगणा इव, कस्याश्च निःसरन्ति सदुपदेशाः, का च पुरा भारते भारतीयैः सुसेविता कस्यै च महर्षयो ग्रन्थरत्नानि समर्पितवन्तः कस्याश्च भारते कोणे कोणेऽधुनापि संस्कृतिलीना कां च प्राप्य

मोदमावहेमहि, इति चेल्लोकमङ्गलावहामुक्ताखिलप्रश्नोत्तरीभूतां संस्कृतभाषामेव पश्यामः। इयमेव सर्वासां भाषाणां जननी। इमामेव प्राप्य साम्प्रतं मोदन्ते जर्मनदेशीयाः, अनयैव निर्वहन्त्यस्माकं नित्यकृत्यादिकम्, अस्याः सकाशादेव नीतयो निर्मीयन्ते शासकैः, अस्याः साहित्यं सर्वानतिशेते, अस्यामेव जगतः सम्भवः, स्थितयः प्रणाशश्चेति यथावन्निर्णीता वर्तन्ते।

दुःखेनेदमुच्यते यदनादिकालसिद्धाऽस्माकमियं राष्ट्रभाषा धर्मभाषा मातृभाषा देवभाषा सम्प्रति "राष्ट्रभाषायोग्या सर्वथा" इति कथनस्यावश्यकता भवति। अस्याश्च आत्मजयाऽप्राप्तयौवनयाऽपूर्णसाहित्यया संकुचितकलेवरया हिन्द्या सह प्रतिद्वन्द्विता? हन्त! दर्शयाम च हिन्द्याः समक्षेऽस्या श्रेष्ठत्वम्, किं दास्या सह राज्ञ्याः कलहः? परं किं कर्तव्यं नायमवसरो भोजराजस्य यत्रासंस्कृतज्ञानां वासोऽपि राष्ट्रे दुर्भरः। इदं तु सगर्वं ब्रूमो यदधुनाऽपि भारतवसुन्धरा जनयत्येव प्रचुरान् संस्कृतज्ञान्। निखिलेऽपि भारते वर्षे नाल्पाः सन्ति संस्कृतस्य पण्डिताः विद्यालयानामपि बाहुल्यं सर्वत्र परं वार्तेयं खटखटायते हृदि यद् "हिन्द्याः सह संस्कृतस्यान्दोलनम् अस्तु समयोऽयं यापनीयः। संस्कृतस्य तु राष्ट्रभाषात्वमवरोत्स्यत एव नहि। किमियं हिन्दी राष्ट्रभाषापदमभिलषन्ती स्थास्यति गिर्वाणवाण्याः समक्षे?। आशामात्रमपि नैव परं तावत् संस्कृतस्य जगन्मंगलनिःश्रेयःसाधकस्य पथि कन्टकीभूय केवलमपवादपदमारुथाय हास्यमेव प्राप्स्यति।

अतः परं भगवन्तमिति संप्रार्थ्य यदीयमस्माकं प्राणेभ्योऽपि गरीयसी गिर्वाणवाणी सद्यश्चिरत्यक्तं राष्ट्रभाषापदमारुह्यायं मङ्गलाभ्युदयदात्री भवेदितिशम्।



# अमृता संस्कृतभाषा ।

जैनाचार्यश्रीदेवचन्द्रसूरिः, वीकानेरम् ।





भारतवासिनो मनुजाः ये खल्वेवं कथयन्ति यद् गीर्वाणभाषा मृतैव । तेषामेतदुद्घोषणं स्वकीयबुध्या लाघवंप्रकटयन्ति ।

वर्त्तमानसमयेऽपि यत्र कुत्राऽपि संस्कृतवाण्याः सम्यगादरं कुर्वाणा मनीषिणो दृश्यन्ते । मृतेति कथनं नैव शोभनम् । वाण्या लाघवं जातम्, न्यूनता जातेति कथनं वरम् । विवाहहोम सन्ध्यावन्दनपूजापाठाद्यत्र भारते ये वैष्णवधर्मानुयायिनः सन्यासिनः गृहस्था वा प्रकुर्वन्ति ते सर्वे नूनं गीर्वाणभाषायामेव कर्त्तारो दरीदृश्यन्ते ।

जैनशासनेऽपि प्रतिष्ठाशान्तिपुजादिकं यन्त्रमन्त्रस्तोत्रादिकार्याणि कुर्वन्तः समुपलभ्यन्ते संस्कृतभाषायामेवकर्त्तारः । पाश्चात्यदेशे ऽत्र वा पठनपाठनप्रकाशनादिकं सर्वं कार्यं पुस्तकानां सुरवाण्यामेव जायते । पुरातनरीत्या तु कार्यं सर्वमस्यां भाषाया मेव प्रभवति । किन्तु खेदमेतद् यन्मातृभाषावत्सर्वत्र भाषणादिकर्मणि नैव प्रचाल्यते । गद्यपद्यादिकमप्यद्यावधि कवयः प्रकुर्वन्त्येव । यत्र कुत्राऽपि विद्वांसो मानमपि लभन्ते । अतो ज्ञायते संस्कृतभाषा मृता नैव ।

मृता वा गता या भग्ना वा चोरेणाऽपहृता वा पश्चान्नैव समुपजीव्यते। मृतो मनुष्यः कदाप्युत्थाय कार्यं कर्त्तुं नैव समर्थः प्रभवति। एवं मृता भाषाऽपि मानवानां न्यूनान्न्यूनमपि ज्ञानमासादयितुं नैवक्षमा स्यात्, किन्त्ववलोक्यन्ते यदाचार्याः, शास्त्रिणः, साहित्यशुभाकराः। तर्क्केशवागीशादिपरीक्षार्थिनः। कवयोऽपि यत्र कुत्राऽपि भोजराज्ञः सभावत्किंचिल्लभन्ते यस्य पार्श्वे कवितां कृत्वा गच्छन्ति तस्य पार्श्वे। मासिकसाप्ताहिकपत्राणि गीर्वाणभाषायां प्रकाशितानि समुपलभ्यन्ते। पठनार्थं साहित्यमपि सुलभं कृतं पूर्वपितृया। पुरा गुरुशिष्यादिकं त्यक्त्वा पितापुत्रौ च त्यक्त्वा नैव कोऽपि ग्रन्थान् स्वकीयमतावलम्बिनां वा परकीयमतावलम्बिनामध्यापयन्ति स्म। एकाऽपि पाठशाला कुत्राऽपि नैव समुपलभ्यते स्म तदा। पुनरपि पुस्तकानामप्यभावो यद्धस्तलिखितानि पुस्तकानि केनाऽपि दातुं नैव शक्यते स्म। अद्यावधि द्विसहस्र वर्षलिखितानि पुरातनपुस्तकानि प्राचीनभण्डागारे तालपत्रेषु विद्यन्ते।

पुरातु शुकादयः पक्षिणोऽपि भाषामिमां वक्तुं शीला अभूवन्। हा हन्त! इदानीं भारते देशे देवगिरां मनुष्या अपि वदनशीलास्स्तोकैव दृश्यन्ते। पुरा प्रचारो देवभाषायाः सम्यगासीत् तदैव मनीपिभिः प्रतिज्ञा कृता। यथा—

अजर्घाः यो न जानाति यो न जानात्यवर्वरीः ॥
अचीकमत यो न जानाति तस्मै कन्या न दीयते ॥१॥

पुनरपिव्याकरणकोपालंकारतर्कादिषु ये ऽपरिचिताः सन्ति तेषां शास्त्रे निंदा कृता।

विना व्याकरणेनांधः वधिरः कोषवर्जितः।
अलंकारं विना पङ्गुः मूकस्तर्क विवर्जितः ॥२॥

अपि च

अङ्गीकृतं कोटिमितं च शास्त्रं नाङ्गीकृतं व्याकरणं च येन।
न शोभते तस्य मुखारविन्दं सिन्दूरबिन्दूर्विधवाललाटे ॥३॥

सम्यगुपयुक्ता सुरभारती कामगौरिव बुधैः स्मर्यते। विपरीता प्रयुक्ता वाणी गोत्वं प्रयोक्तुः शंसति । यथा दण्डिकविकृते काव्यादर्शे—

गौर्गौः कामदुघा सम्यक् प्रयुक्ता स्मर्यते बुधैः।
दुष्प्रयुक्ता पुनर्गोत्वं प्रयोक्तुः सैव शंसति ॥ ४

जैनजैनेतरवैष्णवशिवशक्तिसमुपासकानां तथा बौद्धानां मनुजानां पुरा भाषा संस्कृतमेव। येषां पुस्तकानि गीर्वाणमयानि विद्यन्ते। हस्तलिखितानि काव्यव्याकरणन्यायालङ्कारछंदोज्योतिषवैद्यकानि यथा जैनेतरशास्त्रे निर्मितानि कोषदर्शनादीनि सन्ति तथैव जैनमतावलम्बिनां मानवानामपि पूर्वाचार्यरचितान्यागमादीनि विद्यन्ते । पूजापठनप्रतिष्ठास्तोत्रयंत्रमन्त्रादिविधानं गीर्वाणभाषायामेव समुपलभ्यते ।

"आभ्यन्तरे रागादिभावः प्रभवतु नैव काचिद्धानिः।"
'पण्डितोऽपि वरं शत्रुर्न मूर्खो हितकारकः।"

स्वकीयं स्वकीयं मतं पूर्वाचार्यैर्बद्धं परिपालनीयम्। नैवकस्याऽपि मतस्य निन्दा कार्या । तदेव सार्थकं गीर्वाणगःपठनं भविष्यति । अन्यथा मूर्खा यथा तथा पण्डिता अप्याचरणं प्रकुर्वन्ति। विद्वांसो मनुष्याः मनस्येवं भावयन्ति। अतः नैव कस्याऽपि कोऽपि वचः श्रवणीयम। स्वकीयमतावलम्बिनो ग्रन्थान् पठन्तः स्वकीयात्मानं निर्मलीं प्रकुर्वन्तः सुखेन दिवसं यापयेयुः। कस्याऽपि भाषाया उपरि तथा कीटादारभ्य मनुजपर्य्यन्तानामुपरि दोषो नारोपणीयः। सर्वेषां मानवानां समभावं तुल्यं परिणामं रक्षणीयम। निन्दास्तुत्यादिकं दूरेऽपसारणीयम "मित्रवत् सर्वभूतेषु" "अहिंसा परमो धर्मः" सर्वे एतदेव मन्यन्ते । सनातनेषु वैष्णवशैवजैनादिमतानां ग्रन्था भिन्नाः सन्ति । किन्तु शुक्रनीत्यादिविचारः सर्वेषामेक एव दरीदृश्यते। यथा भर्तृहरिशतकादौ —

दानार्थिनो मधुकरा यदि कर्णतालैर्दूरीकृताः करिवरेण मदान्धबुध्या ।
तस्यैव गण्डयुगमण्डनहानिरेषा भृङ्गाः पुनर्विकचपद्मवनेवसन्ति ॥
अतो मया हृदि धार्यते किल कस्याऽपि ।
समाजे नैव "गिर्वाग्वाणी सरस्वती" मृतेति ॥

---

## बौद्धानां संस्कृतेऽनुरागः ।

ले०—त्रिपिटिकाचार्यो महापण्डितो राहुलसांकृत्यायनः, सारनाथ, काशी ।

—:०:—

भारते किंवदन्तीनां प्रभावः परमः पवित्रः तासां श्रवणेन मनसि जा जायते, यदासु नाल्पमपि मिथ्यात्वम् । भारतीयानां बहूनां विचारे भगवता बुद्धेन वेदानां बहिष्कारः कृतः । अयं बहुभिर्भारतीयैः कविभिरुपवर्णितोऽपि । यत्र तत्र हिन्दीग्रन्थेष्वपि कालक्रमात् विश्वासोऽयं दाढर्यं लेभे । तुलसीदासो दोहावल्यां वदति—

तुलसी महिमा वेदकी, अतुलित कियो विचार ।
जेहि निन्दत निन्दित भयो, विदित बुद्ध अवतार ॥

किन्तु नैषा किंवदन्ती सत्या प्रतीयते । भगवता बुद्धेन वाममार्गिभिः प्रचालितायाः अबोधजनतासु वेदनाम्ना प्रख्यापितायाः पशुहिंसाया एव विरोधः कृतः । वारं वारं वेदविज्ञानरहितैः पण्डितैः शास्त्रार्थाय समाहूतेन भगवता कथितं यद् यस्मिन्

वेदे पशुहिंसा लिखिता वर्तते तस्य वेदस्य तिरष्कारः क्रियते । अनेन कथनेन तस्य पशुषु दयाभावो द्योत्यते । यदि वेदस्य वहिष्कार एवाभिष्टोऽभविष्यत्तदा तदनुजायिभिः संस्कृतसेवा नाचरिष्यत्, यतो वेदभाषैव संस्कृतभाषा । यस्यां पशुहिंसाया उल्लेखो वर्तते ।

संस्कृतसम्पादकेनाधुनैव "विद्वद्वृत्तं" नाम यद् ग्रन्थरत्नं प्रकाशितम् तदवलोकनेन प्रतीयते यदनेके वौद्धाः संस्कृतभाषायाः प्रसिद्धा लेखका आसन् । यद्यपि ग्रन्थस्यास्या अनेके अंशा विवादास्पदा वर्तन्ते तथापि तेषु यावन्न क्रियते सुधिभिर्विचारः तावत् प्रमाणकोटावादरणीया एव । अतस्तत एव केषांचित् संस्कृतज्ञ-वौद्धविदुषां विषये लिख्यते—

## अश्वघोषः ।

कदाचिदयोध्यायां वौद्धानामुत्कृष्टा वसतिरेव नासीत् किन्तु तेषां विश्वविद्यालयोऽपि । यस्मिन् द्विसहस्रसंख्याका वौद्धाः पठन्ति स्म । अयमश्वघोषोऽस्मिन्नेव समये साकेतभुवमलं चकार । अयमासीत् वौद्धसन्यासी भदन्तोपाधियुक्तः । भदन्तशब्दः पूज्य-वौद्ध-क्षपणकेष्वेव प्रयुज्यते । यद्यपि विद्वद्वृत्तलेखकेनाश्वघोषस्य वौद्धत्वदूरीकरणाय स नक्षत्रसंख्याकदन्तवान् प्रसह्याश्वघोषो व्याख्यातः । अनेन महाकविना बुद्धचरित, सौन्दरानन्द, महाकाव्ययो रचनाऽकारि, यस्याः प्रभावः संस्कृतस्य वहूनां प्रतिष्ठितानां कवीनामुपरि आपतति । अयं विक्रमस्य प्रथमशतक आसीत् । अयमेव विचारः पुण्यपत्तनस्थनन्दर्गीकरमहाशयानामप्यस्ति । अस्य रचनेदृशी—

काष्ठं हि मथनन् लभते हुताशं
भूमिं खनन् विन्दति चापि तोयम् ।
निर्वन्धिनः किंचन नास्त्यसाध्यं
न्यायेन युक्तं च कृतं च सर्वम् ॥

## धर्मकीर्तिः ।

अयं बौद्धसङ्गतिनाम्नो ग्रन्थस्य कर्ता । वररुचिभागिनेयस्य महाकवेः सुबन्धोः समये ५५० ईसाब्द आसीत् । गद्यकाव्यस्य प्रथमे वासवदत्ताख्ये ग्रन्थे बौद्धसंमतेरुल्लेखो वर्तते ।

## अमरसिंहः ।

केचिद् वदन्ति यदयं जैन आसीत् किन्तु बुद्धगयास्थे वर्तमाने बुद्धमन्दिरे प्राप्तेनैकेन शिलालेखेन ज्ञायते यदयं बुद्धमन्दिरस्यास्य कर्ता । लिङ्गानुशासनापरनाम्नोऽमरकोशस्य रचयिता बौद्ध एवासीत् । अमरकोशस्य प्रथमोऽयं श्लोको "यस्यज्ञानदयासिन्धोरगाधस्यानघागुणाः ! मदीयं मतं स्पष्टं साधयति । अयं हर्षविक्रमस्य सभायां स्थितो बहूनां साम्प्रतमनुपलब्धानां ग्रन्थानां रचयितेति विद्वद्वृत्तम् ।

## क्षपणकः ।

अयं हर्ष-विक्रमस्य सभायां नवरत्नेषु प्रख्यातो बौद्धः क्षपणकशब्दो बौद्धसाधुष्वेव प्रसिद्धः । किन्तु विद्वद्वृत्तकृतो विचारे नायमासीद् बौद्धः । अस्यैकः श्लोको वृत्तकारेण केनापि कृतात् काव्यसंग्रहादुद्धृतः ।

निर्तिर्भूमिभुजां नतिर्गुणवतां ह्रीरङ्गनानां रतिः,
दम्पत्योः शिशवो गृहस्य कविता बुद्धेः प्रसादो गिराम् ।
लावण्यं वपुषः श्रुतिः सुमनसां शान्तिर्द्विजस्य क्षमा,
शांतस्य द्रविणं गृहाश्रमवतांशीलं सतां मण्डनम् ॥

## कुमारदासः ।

अयं राजशेखरेण प्रसंसितः । सिंहलाधिपो महावंशनामके सिंहलभाषापुस्तके स्मृतः कालिदाससखा जानकीहरणमहाकाव्य-

कर्ता बौद्धः । भारतात् सिंहलं गतेन सिंहलाधिपसत्कृतेन कालि-दासेन कयाचिद् वेश्यया लब्धविषेण मादरनामके स्थाने प्राप्तमृत्यु-ना सख्युः कुमारदासस्यापि मृत्युकारणता लब्धेति । परेकुम्बासि नामके सिंहलभाषापुस्तके स्पष्टं वर्तते ।

"पजेर किवियर पिनियन् जानकीहरणे महाकवेन्दिकुमार-दास् रदकालिदासनाम किविन्दु इरसिय दिवपदि"। अर्थात् राजा कुमारदासो जानकीहरणादि-महाकाव्यानि कृत्वा कालिदासाय सजीवनोत्सर्गं चकार । अधुनाऽपि द्वयोश्चितास्थानं हत्वोधित-नाम्ना प्रसिद्धं वर्तते । काव्यमीमांसायां जात्यन्धः कथितः । विद्वद्-वृत्तकर्तुर्मते खिस्तस्याष्टम्यां शताब्द्यामयमासीत् । अस्य रचनेदृशी—

> सैकते शशिमरीचिलेपने शुक्तमिन्दुकरपुञ्जसन्निभम् ।
> राजहंसमभिवीक्ष्य कातरा रौति हंसवनिताश्रुगद्गदम् ॥

## धर्मदासः ।

"अयं खिस्तस्याष्टमेशतके मगधे बभूवेति विद्वद्वृत्तकृत् । अयं विदग्धमुखमण्डनकर्ता बौद्धः । अस्य रचनेदृशी—

> सिद्धौषधानि भयदुःखमहापदानां,
> पुण्यात्मनां परमकर्णरसायनानि ।
> प्रक्षालनैक सलिलानि महामलानां,
> सौद्धोदनेः प्रवचनानि चिरं जयन्ति ॥

## क्षेमेन्द्रः ।

अयं काश्मीरिकोऽनन्तराजस्य समये खिस्तस्य दशम्यां शताब्द्यां शैवो भूत्वा बौद्धो बभूव । अनेन बोधिसत्वावदा-नकल्पलतिका लिखिता । अस्य रचनेदृशी—

> जिह्वादूषित-सत्पात्रः पीण्डार्थी कलहोत्कटः ।
> तुल्यतामशुचिर्नित्यं बिभर्ति पिशुनः शुनः ॥

## रामचन्द्रः ।

"अयं गौडदेशस्य वीरवटीनामकेऽग्रहारे जातः । कात्यायन गोत्रस्य गणपतेः पुत्रो भारद्वाजगोत्राया देव्या गर्भजो हलायुधस्य भ्राता खिस्तस्यैकादश्यां शताब्द्यां बभूव । अयं लङ्कान्तर्गतजयवर्धनपुराधीशस्य वीरपराक्रमबाहोः सभायां राहुलनामकात् बौद्धात् कविभारतीत्युपाधिधारी शास्त्रार्थे पराजयं प्राप्य तस्य शिष्यतामुपलभ्याधित्य बौद्धागमान् राज्ञः बौद्धागमचक्रवर्तीतिपदवीं प्राप्तवान्" इति विद्वद्वृत्तम् । अनेन वृत्तरत्नाकरस्य पञ्चिकानाम्नीटीका व्यरचि अस्या रचनेदृशी—

> ज्ञानं यस्य समस्तवस्तुविषयं यस्यानवद्यं वचो,
> यस्मिन्रागलवोऽपि नैव न पुनर्द्वेषो न मोहस्तथा ।
> यस्याहेतुरनन्तसत्वसुखदाऽनल्पा कृपा माधुरी,
> बुद्धो वा गिरिशोऽथवा स भगवांस्तस्मै नमः कुर्महे ॥

## दिङ्नागाचार्यः ।

अयं कुन्दमालानामकनाटककर्ता निचुलमित्रस्य कालिदासस्य विरोधी । कालिदासरचितस्य मेघदूतस्य दिङ्नागानामिति श्लोके मल्लिनाथेन स्वटीकायां स्मृतः खिस्तस्यैकादश्यां शताब्द्यां दक्षिणदेशे बभूव बौद्धधर्मानुयायी । किन्तु हन्त ! लोकप्रथितेऽपि बौद्धे दिङ्नागाचार्ये भोजराजस्य सभ्यत्वमारोपयता प्रथितयशसा पं० कालीप्रसादशास्त्रिणा तस्य बौद्धत्वमनुद्घाट्येतिहासविदां महानपराधोऽकारि ! तथापि तेन यत्र तत्र सर्वधर्मावलम्बिनां विदुषामुपरि स्वविचारं प्रकटीकृत्य यः संस्कृतसाहित्यस्योपकारः साधितः तदर्थं वयं संस्कृतशास्त्रमभिनन्दनपरंपराभिः सम्भावयाम एव संस्कृतेतिहासबीजारोपकर्तारम् ।

लेखोऽयं विद्वद्वृत्ताधारे लिखितोऽतो नान्येषामसंख्यबौद्ध पण्डितानामुपरि किंचिल्लेखविस्तरभिया लिख्यते किन्तु अनेन लेखेन बौद्धानां संस्कृतेऽनुरागस्तु स्पष्ट एव ।

# संस्कृतवाङ्मये विदेशिशब्दानां प्रयोगविचारः

( ले० महामहोपाध्यायः डा० श्रीगङ्गानाथझा एम. ए. डी. लिट् प्रयाग )



वि 'देशिशब्दानां संस्कृतवाङ्मये प्रयोगविचार' इति विचारप्रसङ्गेन यत्किञ्चिद्विनिवेद्यते विदेशिशब्दानां संस्कृतवाङ्मये प्रयोगश्चिरन्तनसम्प्रदायानुमोदितत्वे वर्तते। तथाहि जैमिनीयमीमांसासूत्रे तृतीयपादे दशमसूत्रे यदधिकरणन्तत्रत्यः पूर्वपक्षः।

"अर्थाबोधादप्रमाणं पिकालम्भनचोदना" इति अर्थात् पिकस्य आलम्भनं यत्र विहितं तद्वाक्यमप्रमाणम्, पिकशब्दस्यार्येष्वप्रसिद्धत्वेन तदर्थानवगमादिति तत्र सिद्धान्तः।

'मैवम्' म्लेच्छप्रसिद्ध्यापि तद्बोधादविरोधिता' इति। अर्थात्–आर्येष्वप्रयोगेऽपि म्लेच्छेषु प्रयोगात् तदीयप्रसिद्ध्या पिकशब्दस्यार्थो ज्ञातुं सुकरः। अस्मादेतत् प्रतिभाति यत् पिकालम्भन चोदना सम्भाविता तत्रत्य पिकशब्दश्चार्येष्वप्रसिद्धः–ततो म्लेच्छेषु प्रसिद्धेनैव तस्यार्थेन व्यवहार उचित इति॥

'नेम' शब्दोऽर्धवाची–'तामरसशब्दः' पद्मवाची इत्यनयोरपि पिकशब्दवदवगतिर्म्लेच्छप्रसिद्ध्याधीनैव।

अस्त्येतन्मीमांसकानुशीलिता सरणिः। परन्तु अत्र 'स्थितेष्वेतत् समर्थनमिति न्यायानुसारेणेदानीन्तनैरस्माभिर्नवीनानामेतादृशानां शब्दानाम्प्रयोगः परिहरणीय एवेति समीचीनः पन्था इति॥

# संस्कृतभाषायां राष्ट्रभाषायोग्यता।

( ले० महामहोपाध्याय पं० माधवशास्त्री भाण्डारी, प्रधानाध्यापकः, ओरियन्टलकालेजः, लाहोरम् )



संस्कृतभाषाया महत्त्वं कियदस्तीति साम्प्रतिकानां संस्कृतज्ञानामसंस्कृतज्ञानां वा विदुषां पुरतो विशेषतो विवेचनापेक्षतां न भजते। यतो हि पाश्चात्यैर्जर्मनदेशीयैरमेरिका देशीयैरेवमिङ्गलैण्ड देशीयैश्च विद्वद्भिर्मुक्तकण्ठमस्या गुणगौरवं गीयते। इयञ्च सर्वासां भाषाणां जननीति निर्विचिकित्समङ्गीक्रियते। अस्याश्च विद्यमानो ग्रन्थराशिः पुराणेतिहासादिरूपो लक्षावधिवर्षेभ्यः प्राक्कालिकघटनानां समुपस्थापक इति पुरातत्वान्वेषणे निरुपमं साहायकं प्रामाण्यञ्च भजत इति निर्मत्सरमतीनां न तिरोहितम्। एवमपरासु भाषासु कालतो देशतश्च तत्र तत्र परिवर्तनं दृश्यते. न तथा लेशतोऽपि संस्कृतभाषायां परिवर्तनं भवति। तथा हि एकैव हिन्दीभाषाऽद्यत्वे यथा भाष्यते तथा वर्षाणां शतत्रयात्प्राक् महात्मनस्तुलसीदासस्य कालेनासीत्किन्त्वन्यविधैव। एवं महात्मनस्तुलसीदासस्य हिन्दीवाङ्मये यादृशी हिन्दीभाषा उपलभ्यते तदपेक्षयाऽन्यविधैव वर्षाणामष्टशत्याः प्राक् कबीरादीनां वाङ्मये दृश्यते। एवं रूपेण कालतो विपरिवर्तनं स्पष्टमेव। तथा देशतोऽपि व्रजवासिनां हिन्दीभाषा मरुदेशवासिनां हिन्दीभाषातो भिद्यते। मरुदेशीनामपेक्षया च सरयूपारीणानां हिन्दीभाषा भिद्यते। सरयूपारीणानां हिन्दीभाषाऽपेक्षया विहारप्रान्तीयानां

भाषा भिद्यते । तदेवं देशभेदेन विपरिवर्तनं स्पष्टमेव प्रतीयते । एवं रीत्या देशतः कालतश्च विपरिवर्तनं वङ्गभाषायां गुर्जरभाषायां महाराष्ट्रभाषायां द्राविड़ादिभाषायाञ्च दृश्यमानं तत्र तत्र तत्तत्कालिकवाङ्मयेभ्यः प्रमाणीक्रियमाणं नापह्नोतुं शक्यम् । संस्कृत-भाषायां त्वेवं रीत्या देशतः कालतश्च परिवर्तनं तत्तद्देशोत्पन्नतत्तत्कालिकग्रन्थेभ्यः प्रमाणयितुं न शक्यते । इत्येवं स्थिररूपायाः सकलभाषाजननीत्वेन समाद्रियमाणायाः सर्वविधलौकिकपारलौकिकवाङ्मयशालित्वेन निधिरूपाया एवं युगयुगान्तरीयविषयोपस्थापकत्वेन चिरन्तनव्यवहाराऽपणभूताया अत एव गौरवेण-सर्वातिशायिन्याः संस्कृतभाषाया आदरणीयत्वसमर्थनं पौनरुक्त्यं पिष्टपेषणन्यायञ्चावहेदिति तदंशे उदास्महे । किन्तु तस्या अद्यत्वे व्यवहारकाले येषु साम्प्रतिकेषु प्रचलितेष्वर्थेषु शब्दा नोपलभ्यन्ते तदंशे व्यवहारिकीं त्रुटिमेषा भाषाऽऽवहतीति केषाञ्चिदाक्षेपं पार्यालोचयामः समादध्मश्च । तथाहि-स्टेशन, मोटर, सायकल् रेल्वे, रेडियो इत्यादयो ये नूतना आविष्कृताः पदार्था ये च बड़ोदा, बम्बई, मद्रास, लखनऊ, कानपुर इत्यादयो नगरविशेषास्तेषां कृते कीदृशः शब्दप्रयोगः कर्तव्य इत्यत्र च बहवः संदिहते । तदर्थमनेकान्नूतनाञ्छब्दान्निर्मान्ति च । तथाहि मोटर इत्येतदर्थं मरुत्तर इति मेक्समुल्लर इत्यस्य कृते मोक्षमल्ल इति जर्मन इत्यस्य कृते शर्मण्य इति बम्बई इत्यस्यकृते मोहमयी इत्यादिरीत्या नूतनशब्दानां प्रचारमभिप्रयन्ति । तत्रास्माकमेषा विप्रतिपत्तिर्यदि मोटरशब्दः पाश्चात्यैर्मरुदिव तरतीत्यादिप्रवृत्तिनिमित्तमादाय संज्ञात्वेन स्थापितः स्यात्, एवं मेक्समुल्लर इत्येष संज्ञाशब्दो यदि मोक्षप्रक्रियायांमल्लः ( प्रतिभट ) इति प्रवृत्तिनिमित्तमादाय प्रवर्तितस्याद् एवं मुम्बईशब्दोऽपि यदि मोहप्राचुर्यं प्रवृत्तिनिमित्तमादाय प्रवृत्तः स्यात्तदानीं तु एषाऽस्माकं कल्पना सामञ्जस्यं भजेत् । अन्यथा तु 'करोत्यसंस्कारहतामिवोक्तिम्' इति न्यायेन मरुत्तर, मोक्षमल्ल, मोहमयीत्यादयः शब्दा असंस्कारहतत्वमापाद्येरन् । यदि तु शब्दा सादृश्यमात्रेण मोटर इत्यत्र मरुत्तर इति मेक्समुल्लर इत्यत्र मोक्ष

मल्ल इत्यादिः प्रयोगः न तु तत्तत्प्रवृत्तिनिमित्तमादाय इत्यभिप्रेयते तदा तु सादृश्यमात्रलोभेनासंस्कृतिहतानां मरुत्तरादिशब्दानां प्रयोगापेक्षया साक्षादेव संज्ञावाचकानां मोटर मेक्समुल्लर इत्यादिशब्दानां प्रयोगः सामञ्जस्यं भजते। अत एव "कफ्फणाभ्युदयकाव्यम्" "आसफकाव्यम्" इत्यादौ कफ्फण, आसफ इत्यादि संज्ञाशब्दानां भावे कृत एव प्रयोगः। एवं तत्र भवता जगन्नाथपण्डितेनापि "दिल्लीश्वरो वा जगदीश्वरो वा" इत्यादौ दिल्लीशब्दोऽविकृत एव स्थापितः। तत्र भवता व्याकरणमहाभाष्यकृताऽपि "यर्वाणस्तर्वाणो नामऋषयो बभूवुः" इत्यादौ यर्वाणस्तर्वाण इत्यपभ्रष्टशब्दानामविकृत एव प्रयोगः कृतः संज्ञावबोधनाय च "नाम" शब्दः प्रयुक्तः। इत्यादिरीत्या प्राचीनाचार्यप्रयोगानुसारेण तेषां तेषां संज्ञाशब्दानामविकृत एव प्रयोगः क्रियेत चेत्तर्हि सामञ्जस्यं स्यादिति मन्यामहे। यत्र तु दिल्लीत्यस्यस्थाने "हस्तिनापुरम्" इति लाहोर इत्यस्य स्थाने 'लवपुरम्' इति प्राचीनैतिहासिकशब्दाः प्रयुज्यन्ते तथा "औफिस, कालेज, प्रोफेसर, युनिवर्सिटी, इत्यादीनां कृते कार्यालयः, महाविद्यालयः, प्राध्यापकः, विश्वविद्यालय इत्यादयः शब्दाः प्रयुज्यन्ते तत्रापि सामञ्जस्यं सुतरां निर्विचिकित्समेव। परन्तु सादृश्यमात्रलोभेन मरुत्तर. मोक्ष मल्ल इत्याद्यसंस्कृतिहतशब्दप्रयोगो न सामञ्जस्यं भजत इति पूर्वं प्रतिपादितमेव। यत्र तु तत्तदर्थकाः शब्दाः कोशादौ लभ्यन्ते तेषां प्रचारार्थं यत्नः कर्तव्य इत्यपि निर्विचिकित्समेव।

स्यादेतत्। यदि मोटर, मेक्समुल्लर इत्यादयः संज्ञाशब्दा अविकृता एव प्रयोक्तव्या इत्यभिमतं तर्हि मोटरशब्दः स्वरान्तो वा व्यञ्जनान्तोवेति सन्दिह्येत। तथा च तादृशशब्दानां षष्ठीपञ्चम्यादिप्रयोगे महान् विप्लव आपतेत्। एवमाया, कलकत्ता इत्यादिशब्दाष्टावन्ता वा पुंसि आकारान्ता वा इत्यादिः सन्देहावसरोऽपरिहार्यः। किञ्चैषामसाधुशब्दानां शास्त्रप्रवृत्तिप्रयोजक साधुत्वाभावात्तेभ्यो शास्त्रदृष्ट्या विचारे विभक्त्युत्पत्ति-

ण्यपि दुर्लभा इति।

अत्र समाधानम्:—एतादृशानां संज्ञाशब्दानां साङ्केतिकत्वादेव डित्थादिशब्दवत्साधुत्वाङ्गीकारे शब्दप्रवृत्तिनिमित्तकत्वाङ्गीकारे च शास्त्रदृष्ट्या न कोऽपि बाधावसरः। किञ्च मोटर इत्यादि विशेषार्थकशब्दानां सामान्यार्थकेन यानादिशब्देन समासं कृत्वा मोटरयानम् सायकलयानम्, आग्रानगरम्, कलकत्तानगरम्, रेडियोयन्त्रम्. मेकमुल्लरमहोदयः, मुम्बईनगरी, इत्यादिरूपेण प्रयोगे क्रियमाणे साधुत्वांशे, पूर्वोक्ते व्यञ्जनान्तत्वस्वरान्तत्वांशे वा न लेशत्वोऽपि संदेहावकाशः सम्भवेत्। व्यवहारश्च न क्वापि कुण्ठितस्स्यात्।

एवं सत्यस्याः भाषायाः व्यवहारिकप्रयोगेषु सर्वविधाऽपि त्रुटिः परिहृता स्यात्। राष्ट्रभाषावादिभिरप्यस्या राष्ट्रभाषात्वं सामञ्जस्येन समर्थितं स्यादित्यलं पल्लवितेन।

—:०:—:०:—

# संस्कृतविद्या।



"सा विद्या या विमुक्तये" यया विद्यया धर्मरक्षा स्यात् सैव विद्या। सैव विद्या याऽऽर्थिकीं सामाजिकीं, तथाऽऽध्यात्मिकीं मुक्तिं ददाति। यया विद्ययाऽस्माकं मुक्तिर्दूरं गच्छति सा त्याज्या, राक्षसी तथाऽधर्मः। "विमुक्तये" हिन्दुभिः संस्कृतविद्याऽध्ययनीया।

( ले० विश्वविदितकीर्तिः श्रीमोहनदासकर्मचन्दगान्धिमहोदयः )

# संस्कृतस्य गौरवम् ।

ले० श्रीसत्यमूर्तिः, एम० एल० ए० ।

संस्कृतसाहित्यस्य विनम्र-विद्यार्थित्वादहं भवते साधुवादप्रदानमन्तरा न स्थास्यामि यद् भवान् संस्कृताय महत्वपूर्णं स्थानंददाति । यूरोपीयसंस्कृतौ ग्रीकलेटिनभाषयोर्यत् सम्मानास्पदं स्थानं तयोरप्यधिकं मम भारतीयसंस्कृतौ संस्कृतस्य । संस्कृतभाषा मृतभाषोच्यते किन्तु साऽद्यापि जीवति । भवान् पुनरपि संस्कृतभाषां भाषणभाषां निर्मातुं यतते, भवतो ऽस्य प्रयत्नस्य यावती प्रशंसा यावच्च प्रोत्साहनं भवेत् तत् स्वल्पमेव । अहमन्धविश्वासात् भक्त्यावेशकारणाच्च संस्कृतप्रशंसां न करोमि किन्त्वयं मदीयो विश्वासोऽस्ति यद् यो भारतीयो विद्वान् देशे ऽस्मिन् सत्यनिवासी भूत्वा वसितुमिच्छति तस्मिन् संस्कृज्ञानमत्यावश्यकम् । संस्कृताज्ञानस्यायमर्थोऽस्ति स्वपूर्वजानामुत्तराधिकारात् वञ्चनम् । संस्कृतस्य माध्यमादेव वयं तं साहित्यकोषं प्राप्तुं शक्यामो यं पूर्वजाः स्वपृष्ठे ऽत्यजन् । संस्कृतसाहित्यं तदुद्यानं मनोहरं यस्मिन् सुन्दराणि, सुगन्धीनि, सदा विकसितानि सुमनांसि प्रफुल्लितानि सन्ति । अस्मिन् विना श्रमं भ्रमन्तो वयं सुखमाह्लादं, रसं शिक्षाञ्चाधिगन्तुं समर्थाः । मय्यपि स्वल्पं संस्कृतज्ञानं वर्तते तद् बलादहं वक्तुं शक्नोमि यत्कलाया अन्यक्षेत्रेष्विव संस्कृते ऽपीयमुक्तिश्चरितार्था भवति—

"क्षणे क्षणे यन्नवतामुपैति, तदेव रूपं रमणीयतायाः।"

संस्कृतं तदेकं सूत्रं यस्मिन् मणय इव हिन्दवो ग्रथिता भवन्ति। इदं हिमालयादारभ्य कुमारी-अन्तरीप-पर्यन्तं, कामरूपा दारभ्य कराँचीं यावत् समस्त-भारतीयजनतायाः संस्कृतेर्मेरु-दण्डो भवितुमर्हति।

—:※:—:※:—

## मान्याः संस्कृत-संरक्षकाः

—:※:—:※:—

संस्कृतभाषायां तथा संस्कृत-साहित्ये हिन्दुत्वं नितरां भरितम्, यदर्थमहं जीवितुं मर्तुमपीच्छामि। ये संस्कृतभाषायास्तथा संस्कृतसाहित्यस्य रक्षां कुर्वन्ति ते मम मान्याः सन्ति।

—अखिलभारतीयहिन्दुमहासभाया
भूतपूर्वाध्यक्षः श्रीभाई परमानन्दः
एम० ए० महोदयः, लाहोरम्

# सुर–भारती ।

'ले०-साहित्यधुरीणः पं० श्रीमहावीरप्रसादजोशी काव्यतीर्थः, साहित्याचार्यः, डूण्डलोदम् ।

सुवर्णा सद्वृत्ता विविधललिताऽलंकृति-चणा ।
गुणाढ्या निर्दोषा विविध–निवहाराधितपदा ॥
सुरीति–प्रख्याता भवविभव-रूपाश्रितरसा ।
सदेयं शर्वाणी जयति सुरवाणी च सततम् ॥१॥
आदत्ते मधुरा मनस्सुमनसामुच्चारणेनैव या ।
विज्ञाता त्वनुभावयत्यनुपदं ब्रह्माभिधानं पदम् ॥
लोके कामदुघाबुधैर्निगदिता सम्यक् प्रयुक्ता तु या ।
सा वाणी मनसाऽप्रतीत–विभवा किं वर्ण्यतां स्तूयताम् ॥२॥
सत्रैव द्विजराज–मण्डल–कला वृद्धया महत्त्वं गता ।
तद्वृष्टाऽपि निजैः रसैः कुवलयं सञ्जीवयन्ती क्षणात् ।
आह्लादं विबुधान्तरे विगलिताऽऽस्वाद्यान्तरं तन्वती ।
सम्प्राप्ता वसुधां सुधानवरसा गीर्वाण–वाणीच्छलात् ॥
मानं केचन मानयन्ति सुखदं वित्ते सचित्ताः परे ।
सत्त्वे तत्त्वमुपासते हि बहवो धन्यास्तथान्ये गुणैः ॥
स्वान्ते किन्तुवयं श्रिता स्सुर-गिरं, किञ्चिन्नमन्यामहे ।
किं वा कामयतां जनः करगते दिव्ये हि चिन्तामणौ ॥४
कामं काम दुघामघापकरणीं माधुर्यसार–श्रियं ।
पुण्यालाप–कला–कलाप–कलितां तामाश्रयन्तोऽपि ये ॥
पद्यन्ते विपदः पदं प्रतिपदं कर्मायतिस्तत्प्रभुः ।
किं कुर्यात् कुसुमाकरोऽपि न मधौ फुल्ला यदा मालती ॥५॥
भाषा यद्यपि नैकधा, दिविपदां वाचोऽधमर्णाः परम् ।
विच्छित्तिर्नहि तत्र काचिदपराऽप्येतद् विभुत्त्वं विना ॥
एषैव स्फुरति प्रमोदनकृते तेनान्य–भाषा–विदाम् ।
आलोकाय न किं विभाकर–विभा प्रार्थ्याऽपि चक्षुष्मताम् ॥६॥

# आत्मनिवेदनम् ।

## ( सम्पादकीयम् )



यत्पादनूपुरध्वानैः श्रुतयः श्रुतिमागताः
स्पन्दमानं मणिद्वीपे ध्याये दौर्गम्महोऽद्भुतम् ॥

करुणावरुणालयाया जगज्जनन्या अशेषविद्याधारभूतायाः श्रीदुर्गाम्बायाः परमकृपयाऽद्य संस्कृतभाषाभ्युदयबद्धपरिकराणां श्रीमतां संस्कृतग्राहकसंरक्षकपोषकाभिभावकानां वरदे हस्ते संस्कृतराष्ट्रभाषाङ्कस्य परिशिष्टाङ्कं समर्पयन्नयं सर्वसाधनसामर्थ्यहीनो जनोऽमन्दानन्दतुन्दिलितचेतसा पूज्यपितृपादानामाशीर्वादलाभाय प्रयत्नमाचरन्नितान्तं सन्तोषमनुभवति । यद्यपि साधु नःस्मिन्नपि वर्षे तद्दत्ताज्ञायाः पालनं कृतमतो दूयमानेन मनसा तदन्तिके साञ्जलिबन्धप्रार्थनया स्वशिरसि सर्वमपराधमावहन् भूयः स्वकीये क्षेत्रे विविधविपद्दवलनिर्बलीकृतस्तदनुशासनसंरक्षणाय कटिबद्धो भवननल्पसाहसायासनद्धो भवाम्यतः सन्तोषमेव श्रेयस्करं मन्ये ।

अस्मिन् वर्षे न किं किमनुभूतं दुःखम ? एका कन्या द्वे स्नुषे मृताः । षण्मासावधि मयाऽपि मृत्युदेवः समाराधितः शय्याश्रयिणा । भ्रातरावपि चिन्तया जीर्णशीर्णक्षीणकलेवरौ रुग्णौ जातौ । एकदा तृतीयो भ्राता कमलाकान्तोऽपि मृत्योर्मुखादेव निःसृतः । न जाने कियती धनहानिर्जाता । तत्रापि क्षते प्रहारो जातो यद् गवर्नमेन्टस्य पोष्टलविभागेन सहसा संस्कृतपत्रग्रहणमस्वीकृतम् । एवं

प्रतिदिनमेकया नवीनयैव चिन्तया कालो व्यतीतः। अद्यापि तत्संसर्गो न त्यज्यते। तथापि संस्कृतपत्रद्वारा या संस्कृतभाषासेवा, लोकजागृतिर्जाता तामेवावलोकयन् सर्वान् क्लेशान् स्वजन्मान्तरसञ्चितान् तृणतुल्यानेव मन्यमानोऽनल्पसुखकल्पनां करोम्येव।

पाठका जानन्त्येव यत् संस्कृतपत्रद्वारा संस्कृतसम्मेलनस्थापनाय कियदान्दोलनमाचरितम्? भगवत्याः कृपयाऽस्मिन् वर्षे महता समारोहेण सम्पन्नमिदं कार्यमाशास्ति संस्कृतभाषायाः सुप्रचाराय भविष्यति सन्नद्धम्। यद्यपि सम्मेलनमिदमस्मिन्नेव वर्षे जागृतं तथापि तस्य तादृश्येव व्यापकता जाता यादृशी विविधभाषाप्राचीनसम्मेलनानाम्। प्रचारदृष्ट्या तु मदीये विचारे सर्वेभ्योऽन्यसम्मेलनेभ्योऽधिकं स्थानमत्राक्रान्तम्। विहारस्याखिलभारतीयदेवभाषापरिषदाऽपि संस्कृतभाषाभ्युदयाय नाल्पः प्रयत्नः। समनुष्ठीयते। उभयोः संस्थयोः परिवर्द्धनाय संस्कृतपत्रस्य प्रयत्नो न तिरोहितः।

गतवर्षपर्यन्तमपि संस्कृतस्य राष्ट्रभाषात्वसम्पादकं मदीयमान्दोलनं ये पत्रकारा नेतारश्च भारताहितकरं घोषयन्ति स्म त एवास्मिन् वर्षे संस्कृतपक्षपातिनो दृश्यन्ते। हिन्द्यादिभाषापत्रेषु नेतृणां व्याख्यानेषु सर्वत्र संस्कृतमाहात्म्यं पठितमाकर्णितञ्च। अद्य विरल एव कश्चिद् भविष्यति जनो यो मनसा, वचसा वा कर्मणा संस्कृतस्य राष्ट्रभाषात्वे भारतवर्षस्यामङ्गलं स्वीकरिष्यति। अद्य भारतस्य सर्वे संस्कृतज्ञा एकमताः सन्ति संस्कृतस्य राष्ट्रभाषात्वाय। अखिलभारतीयसंस्कृतसाहित्यसम्मेलनेन यद्यस्मिन्वर्षे राष्ट्रभाषा मता संस्कृतभाषा तत् तस्य कार्यमेव किन्तु हिन्दुमहासभया तथा वर्णाश्रमस्वराज्यसंघेन यः संस्कृतभाषाया उपरि पक्षपातः कृतः स नूनमाश्चर्यावहः। हन्त! वर्णाश्रमस्वराज्यसंघेन सर्वत्र हिन्दीभाषायाः प्रचारं कुर्वता सर्वथा वञ्चिताः सनातनधर्मावलम्बिनः। अनेनाज्ञैनेयं स्वल्पापि वार्ता न ज्ञाता यद् यस्य वर्णाश्रमस्य रक्षणाय प्रयत्नः समनुष्ठीयते तं संस्कृतभाषां विना कोऽपि त्रातुं न

शक्तो यतस्तस्य स्थितिमूलं तत्रैव वर्तते। अस्य संघस्य विरोधं तावदहं करिष्यामि यावदयं संस्कृतस्य राष्ट्रभाषात्वं स्वीकृत्य धर्मेण सह संस्कृतप्रचारं न करिष्यति। संघस्य निन्दनीयपरिस्थितेः समुद्घाटनं कृतवता स्वागताध्यक्षेण यदुक्तं तत् सर्वं संघचालकैः सर्वथा मननीयं मन्तव्यञ्च। हिन्दुमहासभाया उद्देशस्तु भ्रान्तिरहितो वर्तते किन्तु तस्याः कार्यप्रणाली नाभिनन्दनीया। तया हिन्दुजातेर्नाश एव सम्भाव्यते न परिरक्षणम्, तथापि तस्याः संस्कृतस्नेहो वलाद् वदति यदियमपि समयं सम्प्राप्य हिन्दुजातेर्हिताय संस्कृतस्य प्रचारेऽपि संलग्ना भविष्यति। को न जानाति यद्धिन्दुत्वं संस्कृतभाषायामेव, निहितमूलम्। यावदियं संस्कृतं सर्वस्वं न मन्यते तावदहं तु पक्षपाती नास्य भविष्यामि, इयञ्चापि स्वध्येयं न प्राप्स्यति। आः! सप्तप्रान्ताधिकारिणाऽपि कांग्रेसेन संस्कृतभाषाया हिताय न किञ्चिदपि कार्यं समनुष्ठितम्? मुसल्माना अरबी, फारसी, उर्दू-भाषायाश्च हिताय निरन्तरं प्रयत्नं कुर्वन्ति किन्तु हिन्दवो क्षुद्र-भाषाया हिन्द्या मोहे कालं यापयन्ति। कियन्ती मूर्खता-पूर्णा कार्यप्रणाली तेषाम्? मया शतधा कथितं यद्धिन्द्यां राष्ट्रभाषात्वशक्तिर्नास्ति। सा तु सार्वजनिकभाषा येन केनापि प्रकारेण भवितुमर्हति। राष्ट्रभाषायां सार्वजनिकप्रचारगुणस्यैवावश्यकता नास्ति, अन्तःशक्तेरपि। हिन्द्यामन्तःशक्तिः सर्वथा न प्राप्यते।

भारतोद्धारहितैषिभिः पुरा विचारणीयं तत्पतनकारणम्। हर्षवर्द्धनसमयपर्यन्तं संस्कृतभाषा पूर्णतया व्यावहारिकी भाषाऽऽसीत्। राष्ट्रभाषात्वं तस्यास्तदानीमप्यासीदधुनापि वर्तते, किन्तु यदुच्यते मया राष्ट्रभाषात्वमस्याः स्वीकरणीयं भारतीयैस्तत् केवलमधुना तस्या अस्वीकरणत्वमवलोक्यैव। हर्षवर्द्धनादनन्तरं संस्कृतभाषायाः पातो बभूव। तदानीं कश्चिन्नेता नेदृगासीद् य आन्दोलनं कृत्वा संस्कृतप्रचाराय सप्रयत्नोऽभविष्यत्। संस्कृतभाषायाः पतनादेव भारतवर्षस्य पतनमारब्धम्। सार्धसप्तशतवर्षावधि न संस्कृतभाषाया उत्थानं जातं न भारतवर्षस्य। अस्यां

शनाऽऽयामागतैरंग्रेजैः संस्कृतभाषाया हिताय सद्बुधिया वाऽसद्बुधिया प्रयत्नः कृतः । ते यदोन्नतां कोटिमागतास्तदा भारतोद्धारान्दोलनमपि चलितं, किन्त्वान्दोलनचालका एतावन्तोऽज्ञाः सन्ति ये भारतपतनकारणं पश्यन्त्येव न । यावदेषां स्थूलं ज्ञानं सूक्ष्मवस्तुनः पर्यवेक्षणं न करिष्यति तावत्प्रयत्नोऽसफलतामेव फलिष्यति । नेतृभिः कदापि न विस्मरणीयं यत् सनातनधर्मस्य, हिन्दुजातेर्भारतस्य च मङ्गलं संस्कृतस्य राष्ट्रभाषात्वसम्पादनमन्तरा कदापि न भविष्यति । तेषां वर्तमानोऽयमान्दोलनप्रपञ्चः केवलं कलहाय, नाशाय, पातनायैवास्ति । तैर्भारते सुदीर्घाऽशान्तिर्निष्प्रयोजनमुत्पादिताऽग्रे ततोऽधिकां तामुत्पादयिष्यन्ति, लाभस्याशा नास्त्येव । कारणं केवलमान्दोलनस्यास्थानचालनम् । यदि भारतस्य सर्वविधान्दोलनचालकाः संस्कृतप्रचारायैकमताः स्युस्तदा भारत ऐक्यस्थापनमपि भवेदान्दोलनपुष्टिरपि ।

इदानीं संस्कृतभाषाभ्युदयदिनानि सन्ति । संस्कृतपत्रपत्रिकाणां प्रचारस्तु शनैः शनैर्वर्द्धत एव पुस्तकलेखनमपि नाल्पम् । तत्कारणं केवलं संस्कृतभाषातिरिक्तप्रचलितशब्दानां तथा कठिनतया कोशेष्वधिगन्तव्यशब्दस्थाने प्रचलितपर्यायवाचिशब्दानां तद्रूप एव स्वीकृतिः । प्राचीनपरम्परापोषकैः पण्डितैः प्रचलितनवीनशब्दानां स्वीकरणं विधाय संस्कृतप्रचारपन्थाः सुगमोऽकारि । तानि दिनानि व्यतीतानि यदा प्राचीनविद्वद्भिः स्वीकृतेयं प्रणाली मया प्रचालिता तदाऽनेकैर्महद्भिरपि विद्वद्भिर्निन्दा कृता, किन्त्वद्यावलोकयामि सर्वत्र तत्परिपाट्या अनुसरणं भवति । यदि नैतादृश्या भाषायाः प्रचारोऽभविष्यत् तदा "भारतपारिजात" सदृशवर्तमानेतिहासबोधकं न चिरस्मरणीयं महाकाव्यमजनिष्यत् । अनेन महाकाव्येन मद्विचारपोषणे मुद्रा दत्ता । वर्तमानोऽयं संस्कृतप्रचारो यदि नवशब्दनिर्माणान्वेषणमूलकोऽभविष्यत् तदा न दृष्टिपन्थानमगमिष्यत् अस्यैव विचारस्येदं फलं प्राप्यते यद् गवर्नमेन्टस्य पोष्टलविभागेन भारते प्रचलितासु ३१ भाषासु संस्कृतायाष्टमं स्थानं दत्तम् ।

गवर्नमेन्टरिपोर्टाध्ययनात् परिज्ञायते यदस्मिन् वर्षे ८५ संस्कृतपुस्तकानां प्रकाशनं जातं यदा गतवर्षे तदासीत् ६५ संख्याकम्। किमिदं नवशब्दानां तद्रूपग्रहणस्यैव फलं न वक्तव्यम्। अद्य भारतीया विद्वांसः संस्कृतभाषायां वर्तमानपरिस्थितिसूचकं भाषणं चिन्तारहिता यत् कुर्वन्ति तत्कारणं केवलं नवशब्दानां तद्रूपे ग्रहणमेवास्ति। बहवो जना वदन्ति यत् संस्कृते नवशब्दानां तद्रूपग्रहणे तस्य परावलम्बः प्रकटितो भवति किन्तु तदन्तिके मदीयमिदमेव निवेदनं यत् पुराऽपीत्थमभूत्। यथा यथा शब्दा आवश्यकतामनुसृत्य संस्कृतेस्वीकृता भवन्ति तथा तथा व्याकरणे कोशे च सुतरां वृद्धिर्जायते। समयं सम्प्राप्य ते सर्व एव स्वीकृताः शब्दाः सांस्कृता भवन्ति। संस्कृते वर्णशक्तेर्वर्णनं धातवोऽपि कर्तुं न शक्नुवन्ति। धातूनां बलमाश्रित्य वर्णपरम्परया अर्थः सर्वशब्देषु सङ्घटितो भवितुमर्हति। इत्थं कोऽपि शब्दो जगति नासंस्कृतो वक्तुं शक्यते। अत एवानेकैः पाश्चात्यविद्वद्भिः स्वीक्रियते यत् संस्कृतभाषैव सर्वजगद्भाषाणां मूलम्। त एवापशब्दा उच्यन्ते ये मूलसंस्कृततो, भिन्ना परिलक्ष्यन्ते। तेषामेव पुनः संस्कृतत्वनिर्माणाय मूल शब्दरक्षणाय च व्याकरणम्। मदीयः संस्कृतस्य राष्ट्रभाषात्वसम्पादनाग्रहः केवलं मूलसंस्कृतस्य रक्षणाय। कस्याश्चिदपि भाषाया नाहं विरोधी किन्तु तत्र सर्वशक्तिमत्वं न स्वीकरोमि। एवं संस्कृतभाषायाः परावलम्बित्वदोषोऽपि निरस्यते।

एका ऽन्याप्यत्र वक्तव्यास्ति वार्ता। इदानीं भारतवर्षं परमुखापेक्षि। भारतीयाः परतः परज्ञानमवलम्ब्य विज्ञानिनो जायन्ते। यदैतेषां विज्ञानबलमाप्स्यति परां कोटिं स्वयमेव परतां सन्त्यज्य स्वतामुरीकरिष्यन्ति। एवमेव संस्कृतभाषाया विषयेऽपि ज्ञातव्यम्। तावदेव विजातीया विदेशीयाः शब्दाः स्वीकरणीया यावद् भाषेयं सर्वत्र प्रचलिता न जायते सर्वत्र च राष्ट्रभाषा न स्वीक्रियते। केचिद्वदन्ति यदधुना प्रविष्टाः शब्दाः पुनर्बहिष्कर्तुमशक्या भविष्यन्ति। नैतत्कथनमुचितम्। संस्कृताद्बहिष्कृताः

शब्दाः स्वयमेव कालप्रेरणया बहिष्कृता भविष्यन्ति। अद्य प्रा-माणां सा पुरातनी भाषा तस्यास्ते दुर्बोधा अनुचिताश्च शब्दाः क्व सन्ति? परिमार्जनपरिमार्जिनी सर्वत्र प्रचलिता समुद्गतान् दोषान् दूरीकरोति। संस्कृतप्रचारकाले यद्यगतिकोऽहं संस्कृता-दितरान् शब्दान् स्वीकरोमि तदा तस्य जाते प्रचारे तान् ब-लाद् बहिष्करिष्यामि। इदानीं संस्कृतरक्षणं यद्यपमानमाप्यापि भवति तदा कालगतेर्ज्ञानं कृत्वा करणीयम्। "स्वकार्यं साधयेद् धीमान्" इति नीतिशास्त्रं मां तथा ऽचरितुं बलात् प्रोत्साहयति। अहं समाचारपत्रस्य सम्पादकोऽतो वक्तुं शक्नोमि यद् यावदधुना विदेशीय, विजातीयशब्दानां ग्रहणं न करिष्यामि तावत् संस्कृत-समाचारपत्रस्य प्रकाशनं लेखनं च कर्तुं न शक्ष्यामि।

यद्यपि संस्कृतस्य महान् प्रचारो जायते किन्त्वस्मै लो-कानुकूलग्रन्थानामभावो महतीं बाधामर्पयति। संस्कृतस्य राष्ट्र-भाषाङ्कस्तथाऽयं परिशिष्टाङ्कोऽत्र प्रमाणम्। उभयोरप्यङ्कयोर्विषय सूची यैः पठिता ते जानन्ति यत्तत्र भाषाविज्ञानसम्बन्धिनोऽनेके विषया आसन्। तेषामुपरि नैकोऽपि लेखः प्राप्यते। तत्र कारणं तादृशानां ग्रन्थानामभाव एव। इदानीन्तनाः संस्कृतज्ञा भाषावि-ज्ञानमपि किमपि वस्तु नेति जानन्ति। यावद् भाषाविज्ञानं लोके न प्रचलिष्यति तावत् संस्कृतस्य राष्ट्रभाषात्वं सम्यक् कदापि सिद्धं न भविष्यति। वाक्यपरिरम्भणात्मकः कलहः सत्यविज्ञान-सिद्धौ साहाय्यं नाचरति। अतो विद्वद्भिः संस्कृतस्य राष्ट्रभाषात्व-सम्पादनाय भाषाविज्ञानसम्बन्धिनो ग्रन्थाः पठनीयास्तांश्चा-धीत्य सरलसंस्कृते नवीना ग्रन्था लेखनीयाः। परमकष्टावहेयं वार्ता ये ऽस्मिन् विषये किञ्चिज्जानन्ति ते संस्कृतज्ञा अपि परेषामु पकाराय न लिखन्ति। ईदृशानां विदुषामन्तिके न जाने कतिधा प्रार्थना मयाऽकारि किन्तु साऽरण्यरोदनमिव जाता। अनेकैर्विद्व-द्भिस्तु पत्राणि प्रहितानि यदीदृशस्य क्लिष्टविषयपूर्णस्य विशेषाङ्क-स्यावश्यकतैव का वर्तते? ईदृशानि पत्राण्यधीत्य मनसि महान्

क्लेशो जायते किन्त्वहं तु तानेव विषयान् प्रकटीकर्तुमिच्छामि ये साम्प्रतमप्रचलिताः सन्ति येषाञ्च परिचालनमत्यावश्यकम्। अन्यथा विशेषाङ्कप्रकाशनव्ययं स्वल्पमूल्यमादाय सहितुं नाहं शक्तः। अतो विद्वद्भिः संस्कृतभाषाया हिताय परमावश्यकनिगूढविषयाणामध्ययनं लेखनमप्यवश्यमेव करणीयम्। समयं सम्प्राप्य सत्पुस्तकानां प्रचारोऽपि भविष्यति। संस्कृतमधीत्य संस्कृतभाषया जीविकां प्राप्य ये संस्कृतस्य हिताय न प्रयतन्ते ते निन्द्या जना अधुना भूमेर्भारभूता एव मन्तव्याः।

अधुना संस्कृतपत्राणां प्रचारस्तु वर्तते किन्तु यथोचितो नास्ति कारणमत्र पत्राणामभाव एव। संस्कृतज्ञाः पत्राणि कामयन्ते किन्तु पत्रप्रकाशकास्तानि तेभ्यो ददन्त्येव न प्रत्युत केवलं निन्दां कुर्वन्ति। एकेन महाविदुषा पत्रप्रकाशकेन पण्डिताः पत्रपाठच्चराः कथिताः। नेदं कथनमुचितमहं मन्ये। मदीया पत्रप्रकाशनकार्ये यदा स्पष्टा त्रुटिः परिलक्ष्यते तदा न दोषभाजो ग्राहकाः। मदीय स्त्वयं विश्वासोऽस्ति यद् यदि संस्कृतं पत्रं समये समुचितं प्रकाशनं विदध्यात् तदा ५० सहस्रग्राहका अपि स्वल्पा एव। अतः पत्रप्रकाशकैः संस्कृतपत्राणां समुचितं प्रकाशनं करणीयं तेषां सहायतां ग्राहकाः स्वयमेव करिष्यन्ति। कैश्चिद्धनिकैः साहससम्पन्नैः संस्कृतभाषायाः साप्ताहिकपत्राणां प्रकाशनं करणीयं यतस्तेषामधुना परमावश्यकता वर्तते। यदि स्थिराणि कानिचित् समाचारपत्राणि प्रकाशितानि भवेयुस्तदा संस्कृतकार्यालयः सत्वरमेव संस्कृतमर्धसाप्ताहिकं स्वल्प एव मूल्ये कर्तुं शक्नोति। इदानीमर्धसाप्ताहिकानां दैनिकपत्राणाञ्चावश्यकता संस्कृतक्षेत्रे महती वर्तते। तत्पूर्त्यै संस्कृत-कार्यालयः सदा सचेष्टो वर्तते। यदि न प्रसरिष्यन्ति समाचारपत्राणि कानिचिल्लोके तदा संस्कृतं सत्वरमेवाधिकां सामग्रीं पाठकेभ्यः प्रायो द्विगुणिताकारे ऽस्मान्मूल्यात् किञ्चिदधिके मूल्ये प्रेषयिष्यति नात्र सन्देहः।

अद्यावधि न जाने कदा मदीयेयमिच्छा पूर्तिमगमिष्यत् किन्त्वा-पत्त्यस्तु मां बलात् प्रहरन्ति। तदाकुलोऽहं तदानीं सर्वमुत्साहं हृदये धृत्वा शय्याश्रितो भवामि। अष्टवर्षेषु जातो जनानां वियोगः स्वकीयानाम्। किं प्रकुर्यामहम् ? द्रव्याभावो व्ययाधिक्यं च मदीयं चेतः सर्वथैव दुनोति। अस्यां दुर्दशायामपि ग्राहकाणां सहानुभूतिः, प्रेम, दया, धैर्य्यञ्च मामनुदिनं सेवाकरणाय संस्कृत-भाषायाः प्रचाराय च प्रोत्साहयन्ति तदर्थमहं तेषामन्तिके कृतज्ञावन-तमस्तकाः स्वं कृतार्थमेव मन्ये।

बहवो जना वदन्ति यत् संस्कृतभाषा राष्ट्रभाषा न भवितु मर्हति यतो ऽधुना तस्याः स्वरूपे कुत्रापि प्रचारो नास्ति। इमां वार्तामहमपि मन्ये किन्तु तदङ्गजा भारतीयाः सर्वा एव भाषा यदा तां परित्यज्य जीवितुमपि शक्नुवन्ति तदा तासु कस्याश्चिद् भाषाया राष्ट्रभाषात्वकल्पना केवलं मनश्चाञ्चल्यमेव। भारतस्य राष्ट्रभाषा सैव मन्तव्या यस्याः पूर्णः प्रभावः सर्वासु भाषासु विराजतेतराम्। ईदृशी भाषा केवलं संस्कृतभाषैव वर्तते। गतजन-गणनागतभाषासम्बन्धिरिपोर्टाध्ययनेन ज्ञायते यदधुनाऽपि संस्कृत भाषायाः। प्राबल्यं भारतीयेषु सर्वत्रैव प्रान्तेषु वर्तते। समस्ते भारते—

१—भारतीयभाषाभाषिणो जनाः ३४, १८, ८८, ००० संख्याकाः सन्ति। एषु—

२—संस्कृतपरिवारभाषाभाषिणां २५, ३७, १२,००० संख्याऽस्ति अस्याम् -

३—हिन्दीभाषिणो जनाः १२, ०२, ३१, ००० सन्ति।

४—११ कोटिजना आयासमन्तरैव हिन्दीं ज्ञातुं शक्नुवन्ति।

५—देवनागर्यां लिप्यां प्रचलितभाषाभाषिणो जना १४, ११ २६, ००० संख्याकाः सन्ति।

६—देवनागरलिपितुल्यलिपिभाषाभाषिणां संख्या ८, ३३, ५१ ००० अस्ति।

७—संस्कृतप्रधानद्रविड़भाषाभाषिणां संख्या—

( क ) मलयालम्—भाषिणः ९१, ३८, ००० जनाः।

( ख ) कन्नड़भाषिणां १, १२, ६,००० संख्यास्ति।

( ग ) तेलगुभाषिणो २, ६२, ७४,००० जनाः।

८—संस्कृतमयभाषाभाषिणो जनाः—

( क ) ताम्लिभाषिणो २, ४, १२.००० जनाः।

( ख ) अन्यभाषाभाषिणो १० लक्षसंख्याकाः।

आभिः संख्याभिः परिज्ञायते—

१—भारते प्रति दशसहस्रं ९, ६८२ जना देशीयभाषाणां व्यवहारं कुर्वन्ति। एवमंग्रेजीभाषाया राष्ट्रभाषात्वं सर्वथा निरस्तम्।

२—उपर्युक्तसंख्याधारे प्रतिशतं भारतीयाः—

( अ ) संस्कृतकुलभाषाभाषिणः ६५ संख्याकाः।

( आ ) संस्कृतप्रधानद्रविड़भाषाभाषिणो जनाः प्रति शतं १३ संख्याकाः।

( इ ) संस्कृतप्रचुरद्रविड़भाषाभाषिणो जनाः प्रति शतं ६ संख्याकाः।

( ई ) संस्कृतभाषां तस्य कोशमाश्रित्य येषां साहित्यस्य समन्वयो जायते तेषां प्रतिशतं ९१ संख्या वर्तते।

( उ ) देवनागरलिपिमनायासेनाध्येतॄणां प्रतिशतं ६७ संख्या वर्तते।

एषामङ्कानामवलोकनेन प्रतीयते यद् भारतस्य यावन्त्यो भाषा वर्तन्ते तासु सर्वास्वेव संस्कृतभाषाया एव प्राधान्यम्। आसां समन्वयः संस्कृतभाषया स्पष्टोजायते। यदि संस्कृतभाषाया राष्ट्रभाषात्वं निष्पन्नं स्यात् तदा नूनं सर्वाभाषाः पुष्पिताः फलिताः स्युः। गवर्नमेन्टस्य रिपोर्टाद् ज्ञायते यदधुनापि भारते ४०० गृहाणां भाषा संस्कृतमेवास्ति।

पण्डिताः सत्कर्मणि दानिनोऽपि भवन्ति यद्यस्य कथनस्य सत्यतां दिदृक्षन्ति सज्जनास्तदैकदा तेषां सूची नूनं पठनीया । एभिः सज्जनैर्मदीया या सहायता क्लेशसमये क्रियते सा तेभ्योऽस्मिंल्लोके परलोके च नूनं यशः शान्तिप्रदा भविष्यति यतः संस्कृतभाषायाः सेवैव साम्प्रतं परमो धर्मः । यो धर्मः संस्कृतभाषां बाधते स न धर्मः । यदि धर्मप्राप्तिभावना धार्मिकाणां हृदये जागर्ति तदा तैः संस्कृतभाषायाः सेवा सर्वतोऽधिका कर्तव्या । संस्कृतकार्यालयस्तान् ससन्मानं पश्यति हृष्यति च । कस्मिंश्चिदपि महत्कार्ये यावत् संघो न भवति तादृशानां जनानां तावच्चिन्तिता फलप्राप्तिर्न भवति । संस्कृतस्य विशेषाङ्कप्रकाशनात् पूर्वं मया विषयसूचीनिर्माणं प्रथमं कार्यं मतम् । राष्ट्रभाषाङ्क—परिशिष्टाङ्कप्रकाशनावसरे विषयसूचीनिर्माणे या मदीया सहायता महामहोपाध्याय पं० गोपीनाथकविराज, पं० नारायणशास्त्री खिस्ते पं० देवसहायत्रिवेदी बी० ए० काशीवासिभिस्तथा सनातनधर्मकालेज-मुल्तानाध्यापकैः पं० दीनानाथशास्त्रिभिः कृता तदर्थं तेषामग्रे केवलं कृतज्ञावनतमस्तक एव तिष्ठामि । यद्यपि सडिंडिमघोषमिदं वक्तुं न शक्यते यन्मदीयं राष्ट्रभाषाङ्क-परिशिष्टाङ्क—प्रकाशनकार्यं संस्कृतभाषायाः किञ्चिन्मङ्गलं करिष्यति तथापि मदीयं मनो वदति यन्मदीया त्रुटिपूर्णाऽपीयं संस्कृतसेवा शताब्धामस्यां संस्कृतभाषात्मकं नवीनं युगमुत्पादयति ययाऽग्रे संस्कृतज्ञाः कृतार्था भविष्यन्ति ।

मदीयाः सर्वे संस्कृतग्राहकाः क्लिष्टविषयाध्ययनश्रान्ताः पुनस्तथा कर्तुमधुना वारयन्त्यतस्तेषां मनोविनोदपूर्वकमस्तित्वज्ञानविवर्धनाय तथोपादेयवस्तुप्रदानाय सूचना दीयते यदग्रे संस्कृतस्य विशेषाङ्कः साहित्याङ्को भविष्यति, तदर्थं ग्राहकैः स्वकीयानि मनांसि प्रक्षालनीयानि । अथ साहित्याङ्कसज्जीकरणाय पुनः सर्वेषां संस्कृतग्राहकाभिभावकानां पवित्रे करेऽनल्पप्रलापमाचरन् क्षमां प्रार्थयन् कृपाकटाक्षं कामयन् परिशिष्टाङ्कं समर्पयामि । अनेन मम पूजनेन संस्कृतज्ञा देवाः प्रीयन्ताम् ।

# संस्कृतादेवनैरुज्यम् ।

( ले० भिषग्धुरन्धरः श्रीमन्तः स्वामिलक्ष्मीराममहाराजः जयपुरम् )





यि भोः विद्यारसायनास्वादनविरुग्णमानसकले-वरा संस्कृतसंस्कृतिसुसंस्कृताः प्राच्यपाश्चात्य-सभ्यता गुणदोषविवेचका विद्वांसः किंचिदिदम पि पठितुं स्वकालव्ययं कुर्वन्तु । "यस्यदेशस्य यो जन्मो तज्जं तस्यौषधं हित" मिति कृत्वा भारतभूसुजन्मनां मानवचतुष्पद्प्रभृतीनां कृते भारतभूसमुद्भवा-न्येवौषधानि समीहितहितप्रदायकानि भवन्ति । यद्यपि संप्रति पाश्चात्यचिकित्सा-पद्धतौ बहवो जना विश्वासभाजो दृश्यन्ते परं ते क्षणिकलाभलोलुपा नेदमवगच्छन्ति यदनया चिकित्सया भविष्ये का हानिरिति । पाश्चात्यचिकित्सापद्धतौ यान्यौषधानि वर्तन्ते सर्वाणि तानि पाश्चात्यजनानामेव तावद्धितप्रदानि । तेषामुत्पत्ति-स्थलानां जलवायवः सर्वथाऽस्मद्देशजलवायुतो भिन्नाः सन्ति, अतस्तेऽनुचिन्तनाद्स्मदस्यानां कृते कथमपि न लाभप्रदायका भवितु-मर्हन्ति। पुनरपि ब्रूमः तस्यां पद्धतावौषधनिर्माणावसरे नेदं विचा-र्यते यदाग्नेयदेशोद्भवमिदं तद्देशीयानां कृते उपयुक्तम् सौम्यदेशो-द्भवमिदं सौम्यदेशीयानामेवोपयुक्तम तथा च जाङ्गलाऽनूपसाधार-णादिस्थलभेदेनापि परीक्ष्य तानि तथा न निर्मीयन्ते, तत्कथमेतद्दे-शनिवासिनां कृते तदुपयोगिता स्यात् । एतत्तु सम्यग् विचार्य यदि क्रियेत तर्हि मायुर्वेदेनैव । अस्मिन् पूर्णाऽरोग्यसंपादनाय तावत्स्थ-लानामेव विभागत्रयं विधाय तत्तत् स्थलनिवासिनां कृते प्रकृत्यनुकु-

लानामेवौषधानां विधानं कृतम्। न क्वचिदपि प्रकृतिं देशं चाविचार्य नास्ति भेषजोपचारविधानम्। यथा-"चिन्तयन् प्रकृतिं देशं चिकित्सामारभेद्बुधः" मात्राविधानेऽपि प्रकृतिदेशौ नोपेक्षितौ यथा—"प्रकृतिं देशदोषौ च वीक्ष्य मात्रां प्रकल्पयेत्" औषधानां संग्रहणे यावानत्र विचारो विज्ञानपूर्णः कृतो न तावदन्यत्र यथा-शरद्यखिलकार्यार्थं ग्राह्यं सरसमौषधम्। विरेकवमनार्थं तु वसन्तान्ते समाहरेत्। वल्मीककुत्सितानूपश्मशानोषरमार्गजाः... नौषध्योकार्यसाधकाः" इत्यादि। पाश्चात्यचिकित्साक्रमे प्रतिरोगाणां पूर्णविज्ञानमन्तराचिकित्साकरणे महाननर्थस्संभवेद्। अत्रापूर्णव्याधेरपरिज्ञानेऽपि दोषमात्रपरिज्ञानेनाऽपि युक्तं संपद्यते आयुर्वेदीयचिकित्सापद्धतिकारा महर्षयो देवाश्च पूर्णविज्ञानवन्तस्त्वासन्नेव तेषामन्तिके तपः प्रभावोद्भूता याऽचिन्त्यसर्वज्ञत्वशक्तिरासीत् किमधुनातनानां वैज्ञानिकानां पाश्चात्यचिकित्सापद्धतिनिर्मातॄणामस्ति ?। यैरियमायुर्वेदीया चिकित्सापद्धतिः कृता ते यानि कर्माणि कृतवन्तस्तान्याधुनिकैः चिकित्सापद्धतिनिर्मातृभिस्त्रिकालेऽपि कर्तुमशक्यान्येव। यथाऽश्विभ्यां यज्ञस्य खण्डितशिरसः संधानं कृतम्। यदुक्तं श्रुते शल्यतन्त्रप्रशंसाप्रस्तावे—"एतद्धि अङ्गं प्रथमं प्रागभिघातव्रणसंरोहात् यज्ञशिरःसंधानाच्च। श्रूयते हि रुद्रेण यज्ञस्य शिरश्छिन्नमिति ततो देवा अश्विनावभिगम्योचुः। भगवन्तौ नः श्रेष्ठतमौ युवां भविष्यतः, भवद्भ्यां यज्ञस्य शिरः संधातव्यम्। तावुचतुरेवमस्त्विति। ......ताभ्यां यज्ञस्य शिरः संहितमिति।

साम्प्रतं शल्यतन्त्रे तेषां पाश्चात्यविज्ञानवतां भूरिप्रशंसा क्रियते। परमायुर्वेदीयशल्यविज्ञानस्य सूत्ररूपे समुत्पादितस्यैषां शल्यविज्ञानं कलामपि नार्हति, परमस्मदीयोपेक्षाया एव फलं यत्तस्य पठनपाठनाभ्यासादिप्रणाली सर्वथाऽवरुद्धा वर्तते। कैरविदितमायुर्वेदशास्त्रानुशीलनपरैः श्रौश्रुतषष्ट्युपक्रमा व्रणादीनाम्। यद्यभ्यसेयुस्तदाऽयुर्वेदज्ञाः किमेतेभ्योऽप्यधिकंसारल्येन व्रणादीनां निराकरणे समर्था न भविष्यन्ति ?।

ये तु मोहाद् वदन्ति यत् संस्कृतसाहित्यमविज्ञानं तेऽस्वमोहं धवितुं पश्यन्तु किमेष संस्कृतसाहित्यैकदेशायुर्वेदः कियान् विज्ञानपूर्णः। "अत ऊर्ध्वमयस्कृतिर्वक्ष्यामः" सु० चि० स्था० १० अ०। "अतऊर्ध्वं खदिरविधानमुपदेक्ष्यामः" तत्रैव। इत्यादि कल्पेषु कुष्ठादीनां हर्तृत्वं यदस्माभिः प्रत्यक्षमनुभूयते किमेते विज्ञानशून्या इति कथमपि कथयितुमुत्साहो भविष्यति ?। निदानस्थानेषु ये हेतवो रोगाणां कृते लिखिता तत् किं नानुभवामः। कस्मिंश्चिदपि योगे तत्रोक्तरोगापहर्तृत्वं प्रत्यक्षमनुभूयते। एषा तु वार्तैवान्या यत्तद्योगस्यान्यथोपयोगः स्यादथवाऽप्रबलशक्तेः प्रबलशक्तिमति व्याधौ प्रयोगस्स्यात्। किन्तु नाऽत्रैषोऽपवादो यदयं योगः सम्प्रति विज्ञानेन दूषितो भ्रमादेव प्राक्समर्थित इति। यथायमपवादः प्रायोऽधुना पाश्चात्यचिकित्सापद्धतौ श्रूयते। "अथातो दुन्दुभिस्वनीयमध्यायं व्यख्यास्यामः" इत्येतन्नामकं कल्पस्थानीयं श्रौश्रुतमध्यायं पश्यन्तु–"अनेन दुन्दुभिं लिम्पेत् पताकातोरणानि च। श्रवणाद्दर्शनात् स्पर्शाद् विषात्संप्रतिमुच्यते" सु० क० स्था० अ० ६। कीदृशं पूर्णं विज्ञानं महर्षीणामायुर्वेदाचार्याणामासीद् यत्ते केवलं दर्शनात् स्पर्शनात् श्रवणादेव आश्चर्यकारिणो विषात् रक्षितुं दुर्लभयोगान् प्राचीकटन्। एवमादिप्रमाणैरायुर्वेदादेव वास्तविकनैरुज्यलाभो निश्चीयते। तच्च संस्कृतभाषाज्ञानमन्तरा न भवितुमर्हति। अतो पूर्णारोग्यप्रदानाभिलाषुकैरवश्यमेव संस्कृतज्ञानावश्यकमिति विरस्य तेऽप्रकृतलेखात्।



# जैनविद्वांसः संस्कृतसाहित्यञ्च ।

( ले० डा० मङ्गलदेवशास्त्री, एम० ए० डी० फिल०
( आक्सन) क्विन्सकालेजप्रिंसिपलः, काशी )




स्कृतभाषाया अभ्युन्नतिः कथं भवेदित्येष विचारोऽद्यत्वे सर्वेषां संस्कृतभाषानुरागिणां मनःसु जागर्ति । नानादृष्टिभिरस्य प्रश्नस्य विषये विचारः कर्तुं शक्यते, परन्नात्र तदवसरः । केवलमेकामेव दृष्टिं पुरस्कृत्य किञ्चिदत्र विचार्यते सा चेयं यत् संस्कृतानुरागिभिः संस्कृतस्य पठनपाठनविषये साम्प्रतिक्या विचारसङ्कीर्णतायाः परित्यागो विधेयः । अन्यथावनिगर्ते पतिता जीर्णशीर्णशरीरा सा संस्कृतभाषास्मिन् सर्वथाननुकूले काले कथमपि कदाचिदपि भूयोऽभ्युन्नतिमुखी भविष्यतीति दुराशामात्रमेव ।

भारतीयार्यधर्म इव संस्कृतभाषाऽपि सर्वेषामप्यास्माकमार्यधर्मावलम्बिनां वरिष्ठः शेवधिर्गर्वस्य च विषयः । एको हि आर्यधर्मवृक्षोऽसंख्यशाखाप्रशाखारूपेणातिविस्तृतः—

सहस्रशीर्षाः पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं सर्वतो वृत्वा ऽत्यतिष्ठद्दशाङ्गुलम् ॥

इत्यादिश्रुतिभिर्गीयमानविराट्पुरुष इव नानारूपैः पल्लवितः पुष्पितः फलितश्च साम्प्रतं समन्ताद् भारतभूमिमलङ्करोति । एतद्दृष्ट्या हि सोऽपि 'एको ऽश्वत्थः सनातनः" इत्येवं वर्णयितुं शक्यते । शैव, वैष्णव, बौद्ध, जैन, आर्य सिक्ख-प्रभृतयः सर्वे ऽपि भारतीयधर्मास्तस्यैव शाखाप्रशाखारूपाः । भारतीय-

संस्कृतीत्यपरनामा एक एव जीवनरसस्तान् सर्वान् आप्याययति, परिपोषयति च, तेषां सर्वेषामन्यधर्मेभ्यः किञ्चिदनिर्वचनीयं वैशिष्ट्यञ्च सम्पादयति ।

तस्य खलु भारतीयसंस्कृत्यपरनामधेयस्य भारतीयजीवनायामृतकल्पस्य जीवनरसस्य सर्वकामदुघादोग्ध्रीवेयमस्माकं मातृरूपा देववाणी । अत एव तस्याः परिपोषणेनैव भारतीयसंस्कृतेः परिपुष्टिस्तदनुयायिनां सर्वेषामार्यधर्मावलम्बिनामस्माकं सर्वाङ्गीणा समुन्नतिश्च संभवति ।

कस्यैतदविदितं यत् प्रायः सर्वेषामार्यधर्मावलम्बिनां धार्मिकं साहित्यं प्राचुर्येण संस्कृतभाषायामेव वर्तते । प्रायः सर्वेषामप्यार्यधर्माणामनुयायिभिराचार्यैरस्याः साहित्यभाण्डारस्य परिपूर्तिः प्राचीनकालादेव कृताऽस्ति । ततश्चास्याः समुन्नतिविषये सर्वैरप्यार्यधर्मानुयायिभिः प्रयत्नो विधेय इत्येवार्थाद्यापद्यते ।

जैनधर्मस्याचार्यवर्यैः संस्कृतसाहित्यस्याभिवृद्धये यत्कृतं न तत् कस्यापि तिरोहितम् । स्वसम्प्रदायपरिपुष्ट्ये यत्तेषां दर्शनादिविषयकमत्यद्भुतं विपुलञ्च वाङ्मयं तत् सहसैव तात्कालिकविदुषां साधुवादानामभ्यर्हणायाश्च पात्रम् । तदाधारेण परस्परस्पर्धमेव समुन्नतमन्यदपि दर्शनशास्त्रम्परम्परया तद्दृणि । नात्र तद्विषये किञ्चिद्वक्तुमभीप्सितम् । परन्तु सामान्यसाहित्यविषयेऽपि यज्जैनाचार्यैः संस्कृतभाषाया महदुपकृतन्तदपि अत्यद्भुतं सर्वथा प्रशंसनीयञ्च ।

व्याकरणविषय एव तावत् कस्याविदितं यत् माधवाचार्यहरदत्तमिश्रकैयटसदृशानां वैदिकधुरन्धराणामपि चिराय बहुमता काशिकेति सुप्रथिता अष्टाध्यायीसूत्रवृत्तिर्जैनाचार्ययोरेव कृतिः सुप्रसिद्धा न्यासेतिनाम्नी तट्टीका च जैनाचार्यस्यैव कृतिः । दिगन्तविश्रान्तकीर्तेः श्रीहेमचन्द्राचार्यस्य कृतेर्हेमचन्द्र शब्दानुशासनस्य वा नाम केन न श्रुतम् ?

कोषविषयेऽपि अर्वाचीनानां नानाकोशानामुपजीव्यस्य दिष्ट्या अद्यत्वेऽपि संस्कृतानुरागिभिः सबहुमानमनवरतमभ्यस्यमानस्य अमरकोशस्य जैनाचार्यकर्तृत्वं कस्याविदितम् ? श्रीहेमचन्द्राचार्यविरचिता वा नानाकोशाः केन न श्रुताः ?

गद्यपद्यविषयेऽपि मान्यैरुदात्तचरितैर्जैनाचार्यैः प्रणीतानि "आत्मानुशासनम्" "धर्मशर्माभ्युदयः" "सुभाषितरत्नसन्दोहः" "क्षत्रचूडामणिः" विदग्धमुखमण्डनम्" "यशस्तिलकचम्पूः" जीवन्धरचम्पूः" इत्यादीनि शब्दसौन्दर्येण रचनाचातुर्येणार्थप्रौढ्या च विद्वन्मनांस्यावर्जयन्ति। कादम्बर्यादिकाव्यनिबन्धानां जैनाचार्यकृताष्टीका अपि सर्वेषामतीवोपयोगिन्यः। अलङ्कारशास्त्रेऽपि "अलङ्कारचिन्तामणि" प्रभृतयस्तेषां कृतयः कृतिना केन नाकर्णिताः?

तदेतेन दिङ्मात्रप्रदर्शनेनैवानुमातुं शक्यते यत् सामान्यसाहित्यविषयेऽपि जैनाचार्यैः कीदृशी संस्कृतभाषायाः सेवा कृता। तदर्थं हि ते सर्वेषामपि संस्कृतानुरागिणां धन्यवादार्हाः।

एवं प्राचीनकालादेव संस्कृतसमुन्नतिविषयेऽस्माकं पूर्वाचार्याणां सद्भावेन परस्परं सम्भूयैव कार्यकारिणामत्युदारा प्रवृत्तिरासीत्। सा चेयं प्रवृत्तिः पुनरपि यथा पुष्टिं समश्नुते, यथा च संस्कृतपठनपाठनविषये विदुषां छात्राणाञ्च विचारः संकीर्णतां विहाय उदारतां लभन्ते तथैवास्माभिरनवरतं प्रयतनीयम्।



## संस्कृतस्य राष्ट्रभाषात्वाय राजाश्रयस्यावश्यकता

ले०—पंचाम्बुभूषण पं० बलाकीरामशास्त्री विद्यासागरः, अमृतसरम्।

श्रीमन्तो धीमन्तः पण्डितप्रवरा विदांकुर्वन्त्येव यत् सर्गादौ परमात्मा ब्रह्माणं ससर्ज, तस्मै वेदाँश्चोपदिदेशेति। तथा च श्रुतिः—"यो ब्रह्माणं विदधाति पूर्वं यो वै वेदाँश्च प्रहिणोति तस्मै" इति। सृष्ट्यारम्भकाले सर्वतः प्रथमं तावद्दैवी सृष्टिरभूत्। तथा च श्रुतिः—"एतद्वति वै प्रजापतिर्देवानसृजत" इत्यादि। तदानीमेव दैवीवागपि प्रवृत्तासीत्। सैव दैवीवाक् 'संस्कृतम्' इत्यभिधीयते। यथाह दण्डी— संस्कृतंनामदैवीवागन्वाख्याता महर्षिभिः" इति। अतएव 'दैवीं वाचमुपास्महे" इति संगच्छते। तस्यामेव संस्कृतभाषायां वेदादिसमस्तसच्छास्त्राणि प्रादुरभूवन्निति निर्विवादम्।

संस्कृतभाषैव सर्वभाषादिमा भाषान्तरजननी चापीति सुनिर्णीतमेव स्वदेशीयैर्विदेशीयैरपि पुरातत्त्वविद्भिर्महानुभावैरिति नास्त्यत्र कस्यापि विसंवादः। यादृशी सर्वगुणसम्पन्ना सावयव-वर्णध्वनिलिपिसर्वाङ्गसम्पूर्णा निर्दोषा चास्ति संस्कृतभाषा नहि तादृशी काप्यन्याभाषेति सुविदितमेव धीमताम्। संस्कृतभाषायां यद्यथैव लिख्यते तत्तथैवपठ्यते। न तु भाषान्तरवत् किञ्चिदन्य-ल्लिख्यते पठ्यते चान्यत् किञ्चित्। यथा संस्कृतभाषायामकार-स्थाने 'अ' इत्येवलिख्यते पठ्यते चापि। परन्तु आंगलभाषाया मकारस्थाने 'ए' इति लिख्यते पठ्यते च 'अ' इति। तथा पार-सीकभाषायामकारस्थाने 'अलिफ' इति लिख्यते पठ्यते च 'अ' इति निदर्शनमात्रमेवालम्।

तदेवं संस्कृतभाषा तथा भवितुमर्हति यदि पूर्णतया राजाश्रयः स्यात्। किञ्च—यथान्यत्र सर्वत्रापि प्रत्येकस्मिन् देशे तत्तद्देशीयभाषैव राजभाषाराष्ट्रभाषाव्यवहारिकीभाषा चास्ति। तथैवास्मिन्नपि देशेऽत्रत्यसर्वभाषाप्राचीनतमा सर्वोत्तमा सर्व-प्रधाना चापि संस्कृतभाषा तथा भवितुमर्हति यदि पूर्णतया राजाश्रयः स्यात्। अपि च—यथा पुरापि राजाश्रयणैव महाराज श्रीभोजदेवराज्यकाले किमुत राजभाषाराष्ट्रभाषा वा प्रत्युताबाल-गोपालबालिकानामपि व्यावहारिकीभाषापि संस्कृभाषैवासीत्। तथैव यदि कदाचिद् यथाकथञ्चिद् येन केनापि प्रकारेण साम्प्रत-मेवाथवा भाविनि नवीनशासनविधाने हि पूर्णतया राजाश्रयः स्यात्तदावश्यमेव संस्कृतभाषा राजभाषाराष्ट्रभाषाव्यावहारिकीभा-षापि स्यादन्यथा न कदापीति दिङ्मात्रमेतत्।

## संस्कृतभाषैव सर्वभाषाजननी।

( ले० पं० वाचस्पतिशर्मा, ज्वालापुरम् )

सर्गादौ का भाषा कथं वा तस्या व्यवहार प्रसाराविति विचा-रणा। परं महत्त्वमधिरूढानां पाश्चात्यपौरस्त्यकोविदानां भाषावि-

ज्ञानां विशेषज्ञानामत्र विषये नास्ति विसंवादिता यत् सृष्ट्यारम्भे द्वे एव भाषे, एका वेदभाषाऽपरा संस्कृतभाषेति। अद्यत्वे विभिन्नभूखण्डेषु व्यवहृता भाषाः स्वशब्दशैल्या स्वयमुद्घोषयन्ति यद्वयं सर्गादिजनुषः सकलभाषाजनन्या भगवत्याः सुरभारत्याः संसृतय इति। यतो हि संस्कृतभाषायां ये केचन शब्दा उच्चारणप्रयासिनस्तेषां वर्णपरिवर्तनं परिवर्धनं वा विधाय विस्तृतव्यवहारे चोपयोगवहं लघुतरशब्दप्रयोगं पुरस्कृत्य संस्कृतभाषैव विभिन्नकाले देशे वा रूपान्तरं प्राप्ता संज्ञान्तरवाच्यतांगता। एष च वर्णपरिवर्तनप्रकारो नार्वाचीन एव किन्तु प्राचीनोऽपीति प्रमाणीकरोति यास्कमुनेर्निरुक्तलक्षणम्—

वर्णागमो वर्ण-विपर्ययश्च, द्वौ चापरौ वर्णविकारनाशौ।
धातोस्तदर्थातिशयेन योग, स्तदुच्यते पञ्चविधं निरुक्तम्॥

किञ्च प्राक्तनविस्तृतव्यवहारेषु भाषायां सर्वदा यथासंभवं संकोचो भवतीत्यनुभवसिद्धम्। संस्कृतभाषायां वैदिकभाषायां प्राकृतभाषास्वपि चैकवचनं द्विवचनं बहुवचनमिति त्रीणिवचनानि सन्ति। सम्प्रति प्रचलितासु चाङ्गलादिभाषासु वचनद्वयी दृश्यते। तत्र द्विवचनमन्तरापि कार्यनिर्वाह इत्यनुभवेन ज्ञापिते प्राक्तन प्रचलितद्विवचनस्य विलोप एव निश्चाययति सुरभारत्याः सकल भाषा मातृत्वमिति।

अपिच संस्कृतस्य द्यौः शब्दस्तदर्थएव अरबीभाषायां (योः) इति. अफ्रीकास्थस्वाहिलीभाषायां ज्यावित्यपभ्रष्टसरण्या (जुमा) इति, चीनीभाषायां (तौ) इति जापानीभाषायां (दे) ग्रीकभाषायां (ज्योस्) इटलीभाषायां (जुपिटर) यूरानिके (त्यू) इत्येवं विरूपतां सम्पन्नः प्रयुज्यते। संस्कृतभाषाया गोधूमनीलोत्पलशब्दौ भाषान्तरे गुन्दुमनीलोफरतांगताविति पांसुलपाद हालिकोऽप्यवधारितुमलम्। इदानीं कथमिव संस्कृतशब्दा विकृतिमनुभवन्तो भाषान्तरेषु प्रविष्टा इति हंसशब्दस्येतिवृत्तश्रवणेन ज्ञास्यन्ति भवन्तः। संस्कृतभाषाया हकारवर्णो जन्दभाषायां जका-

रतामापन्नो ( जस ) शब्दः सम्पन्नस्तत्प्रयोगस्तु बहुकालं यावद्ज-र्मनवास्तव्यैः ( जंस ) रूपेण कृतः, । परं नैर्यदा फिनीशियालिपिः स्वीकृता तदा जकारः कदाचित् ( जी ) वर्णेन कदाचित् ( जे ) वर्णेन कदाचित् ( जेड् ) वर्णेनाङ्कितुमारब्धः । जीवर्णस्य प्रायशो गकारोच्चारणं भवतीति तत् लिपिप्रभावात् ( गंस ) इति भूत्वा गंज इत्यभूत् । तदनन्तरं यूरोपखण्डस्य विभिन्नभाषासु प्रयुज्य-मानो गंसेत्युच्चारणाद् गैस ततो गूज तथा खेंस खेनादि रूपेण प्रसिद्धिमगमत् । इति स्वल्पतरविकारमुद्वहन्तो शब्दशरणी संस्कृ-तप्रभवतामेव घोषयति । अयं च धातूनामनेकार्थत्वेऽपि शब्दार्थानां नियतविषयता दृश्यते तथा च भाष्यकारः—

"तै ते शब्दास्तत्रतत्र नियतविषया दृश्यन्ते रवतिर्गतिकर्मा कम्बोजेष्वेव भाषितो भवति । विकार एवैनमार्या भाषान्त इति" । अस्त्यप्रयुक्त इति वार्तिकखण्डनावसरे "सुमहान्" शब्दस्य प्रयोग विषयः सप्तद्वीपा वसुमती त्रयोलोका इत्यादिना समस्तव्यवहारि-कसाहित्यशब्दानामनुशासनाय प्रवृत्तशास्त्र इति भाष्यकारस्य प्रति ज्ञापि सर्वत्रसंस्कृतभाषैवेति ध्वनयति ।

एवं पूर्वोक्तप्रमाणानामनुशीलनेन निःसरति सिद्धान्तः 'संस्कृतभाषा समस्तभाषा शब्दानां जननीति' नात्र कस्यापि मति-मतो बुद्धिवैमत्यं भविष्यतीति निर्विवादम् ।

—:::—

## संस्कृतशिक्षासरणिसमालोचनम् ।

ले०—श्रीकिशोरीलालशास्त्री, झांसी ।

वन्दे तां भारतीं भव्यां, स्मेरास्यां स्मृतिदायिनीम् ।
यत्कृपा लोकतो भूयाद् भारतः प्रतिभारतः ॥

समवलोक्य खलु लेखनोत्साहदायकं समागतं सम्पादकीयं पत्रं किमपि समालोचयामि वर्तमानसंस्कृतशिक्षापद्धतिम् सम्यग्गुणावस्थोऽप्यतो हि बलवतोऽनर्गल प्रलापोऽस्मिन् प्रश्नैः ।

साम्प्रतं हि संस्कृतशिक्षापद्धतिः प्राचीनैव वर्तते। प्राचीना हि विद्वान्सः स्वकीयामभ्यस्तां गुरुपरम्पराप्राप्तपाठनपद्धतिं परिवर्तयितुमसमर्था इव लक्ष्यन्ते तदनुयायिनो नवीनाश्च, यतो हि न समवलोकितास्तैराधुनिका विद्यालयास्तच्छात्राणां क्षीणस्मृतयश्च। प्रारम्भकाल एव ते 'नत्वा सरस्वतीं देवीं' 'प्रणम्य परमात्मान'मिति वा पाठमसमये कृतस्वगुर्वानुकरणाः स्वकीयं सर्वं पाण्डित्यं प्रकटीकुर्वन्ति कोमलमतीनामन्तेवासिनां पुरतः। छात्राश्चाश्रुतपूर्वं सन्निपातजल्पितमिवाकर्ण्य तद्वचनं आत्मनोऽनधिकारिणो मत्वा संस्कृताध्ययनकाठिन्यताभीताः 'प्रथमग्रासे मक्षिकापात' इव मन्यमाना नाग्रेऽध्येतुमभिवांछन्ति, प्रत्युत संस्कृताध्ययनं विहाय म्लेच्छभाषाध्ययनतत्परा वोभूयन्ते। एतत्तु समीचीनमेव यतो हिं यो नरो भाषां भाषितुं पठितुमपि च न जानाति स कथं तस्याः पांडित्यपूर्णं प्रवचनं वोद्धुं शक्नुयात् नोदेत्येवैष विचारोऽस्माकम् सहृदयानां मानसेषु। समवलोक्यन्ते साम्प्रतम् वहुशो व्याकरणशास्त्रिपरीक्षोत्तीर्णा यत्र तत्र हितोपदेशपञ्चतन्त्रादि सामान्यग्रन्थस्थकथाध्ययनंतत्पराः, केचिच्च विशेषेण दयनीयाः कर्तृकर्मक्रिया पुरुषविभक्तिज्ञानरहिताः। सुस्मरामि खल्वध्ययनकालिकीमेकामाकस्मिकीं घटनां यदीदृशा एके व्याकरणतीर्था दृग्गोचरीभूता अभवन् ये भामिनीविलास काव्यस्थमेकमशुद्धं केनापि प्रपठितम्—"कमलिनि मलिनी करोषि चेतः किमिति वकैरवहेलितानभिज्ञैः। परिणतमकरन्दमार्मिकास्ते जगति भवन्तु चिरायुषो मिलिन्दाः॥" इति पद्यं संशोधयितुम् भावार्थं प्रकाशयितुं चासमर्था आसन्। तदानीमेवैकेनान्तेवासिना तच्छोधनं भावार्थप्रकाशनं च कृतमासीत्। किमत्र कारणं केवलं तेषां भाषाज्ञानकौशलाभाव एव नु? मन्ये, तैः प्रारंभत एवात्मगुरुजनानामग्रतस्तोतारटनं विधाय परीक्षासाफल्यं प्राप्तम्, कथमन्यथैवं विधं तेषामुपहासास्पदं पाण्डित्यम्? साम्प्रतमपि चावलोकिता वहुश ईदृशश्शास्त्रिणः। अतः प्रथमतश्छात्राणाम् शब्दरूपावलिधातुरूपावलिसमासचक्रामरकोषादीनध्याप्य विभक्तिज्ञानं कारयित्वा संभाषणचातुर्यं शुद्धसुन्दरलेखनकौशलमनुवादपाटवं चोपदेष्टव्यमनन्तरं च काव्यन्यायव्याकरणादि ग्रन्थाः पाठनीयाः। यतो हि साधारणभाषाज्ञानमन्तरोच्चसाहित्याध्यापनम्—"अन्धस्य किं हस्ततलस्थितोऽपि प्रकाशयत्यर्थमिह प्रदीपः" इति जनश्रुतिमेव

चरितार्थां करोति।

अन्यच्च देशकालानुकूलव्यवहारज्ञानोपदेशश्छात्रांणाम्प्रथमत एव कारयितव्यः। यद्यपि "काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतय" इति नियमानुसारं काव्याध्ययनानन्तरं व्यवहारज्ञानं समुत्पद्यत एव, परं तदपि कविकालिकमेव नत्वाधुनिकम्, तदपि च न वर्तमानकाले व्यवहर्तुं शक्यते तदनुकूलपरिस्थितेरभावात्। व्यवहारस्तु सर्वदापरिवर्तमानं दरीदृश्यते। यथा—पूर्वं नियम आसीद् यद् नित्या समासे संधिरपेक्षते।

संहितैकपदे नित्या नित्याधातूपसर्गयोः।
नित्या समासे वाक्ये तु साविवक्षामपेक्षते॥

परं त्वाधुनिका नैतन्मन्यन्ते। अस्ति तेषां कथनं यत्समासे यद्यपि नित्या संहिता विधेया परंन्नाभिधेयशब्देषु भ्रमोत्पादकत्वात्। तथाहि—"श्री अविनाशचन्द्रं शर्मा" इत्यत्र नित्यसंधौ 'श्र्याविनाशचन्द्रे" जाते कथं साधारणजनानां सुखेन नामधेयज्ञानं भविष्यति? अत एव "नाभिधेयेषु नित्या संधिविधेया" इति तेषां मतम् समीचीनमेव लक्ष्यते। एवमेवाधुनिकनगरग्रामस्थान वस्तूनां नूतननामपरिकल्पनापि मन्दप्रयोजनमेव। यथा—स्टेशनं गच्छामीत्यस्य स्थाने "वाष्पशकटविश्रामस्थानं गच्छामीति। एवमाधुनिकाः "संधिं विवक्षाधीनं" "नामधेयापरिवर्तनं" अन्यभाषाशब्दानां संधिनियममन्तरा विभक्ति जोजनया प्रयोगादिकम्" च सरलसर्वानुकूलसंस्कृतभाषाप्रचारायैवानुमोदन्ते यदि वयं संस्कृतभाषाया राष्ट्रभाषात्वं कामयामहे तदस्माभिरपि पूर्वोक्ता नियमाः स्वीकरणीयाः। "अन्धेनैव नीयमाना यथान्धा" इव यदि वयमपि स्वप्रखरपाण्डित्यप्रकाशनतत्पराः क्लिष्टतरप्राचीनशब्दप्रयोगं विधास्यामस्तन्न कदापि कथंचिदपि भविष्यति राष्ट्रभाषा संकृतभाषा, समयानुकूलव्यवहारासहत्वात्, कल्पितानेकार्थविभिन्न शब्दबाहुल्याच्च।

प्राथमिकशिक्षायां व्याकरणोपदेशे साधनप्रक्रियायां सुद्ध्युपास्यादिप्रयोगेषु इकोयणचि, अनचि च, झलांजश् झशि" इत्यादीनि मुख्य सूत्राण्येवोपदेष्टव्यानि न तु रामौ इत्यादिप्रयोगेषु निर्देशप्रमाणानि "तौ सत्" सदृशानि मन्दप्रयोजनानि सूत्राणि। व्याकरणशास्त्रं हि पूर्वप्रयुक्तभाषाप्रादुर्भूतं तत्संरक्षकमेव न तु विध्वंसकम्, अतः स्वीकृता बहवः शब्दा व्याकरणशास्त्रे निपा-

तत्वेन गणपाठेन च । भाषाया व्याकरणम्भवति नतु व्याकरणस्य भाषा । अतो यथा भाषाप्रचारे कोप्यन्तरायो न भवेत्त था-त्यावश्यकान्येव सूत्राण्यध्यापनीयानि प्रथमतः । यथेच्छं पठन्तु च्छात्रा भाष्यादिकमनन्तरम् । न तेन कापि-हानिः संभाव्यते बालमतीनां बालानामिति ।

स्थालीकणन्यायेन संजातमेतत्प्राथमिकशिक्षासरणिसमालोचनम् । विधीयत इदानीमाध्यमिकपाठ्यप्रणालीविवेचनम् । माध्यमिकशिक्षायामपि व्याकरणमेवपर्यालोचनीयं वर्तते, यतो हि दृष्टा बहवोऽन्तेवासिनः संस्कृतोच्च-शिक्षापराङ्मुखा विशेषतो व्याकरणस्य । व्याकरणशास्त्रे प्रथमपरीक्षानन्तरं मध्यमाप्रथमखंड एवच्छात्राणां पठनपद्धौ हिमालय इव दुरतिक्रमोऽन्तरायः । नैव शक्नुवन्तिच्छात्रा रटनपरा अपि पंक्तिव्याख्यानानि सर्वथा बोद्धुम् । अतः पराङ्मुखा निधनतापरिपीडिताः समवलोकितवैयाकरणप्राज्ञजनविडम्बनाः दीना-श्छात्राः प्रारभन्तेऽर्थकरीं विद्यामध्येतुं कर्मकाण्डं ज्योतिः शास्त्रमायुर्वेदं वा । आदशवर्षादनुभवामि, यदन्तेवासिनो यथा-कथंचित् प्रथमपरीक्षामुत्तीर्य सिद्धान्तकौमुदीप्रथमदर्शनकालादेव व्याकरणाध्ययनाद्विरमन्ति येनावतिष्ठन्ते ते सर्वथाव्याकरणज्ञानदुर्विदग्धा एव । नैव दरीदृश्यते विद्याशिक्षाधारभूता मेधा तेषु, वंशपरंपरागतानुमितब्रह्मचर्यपालनाभावात्, कदन्नभोजनसंस्काराच्च । न च शक्नुवन्ति कथमपि फक्किकाव्याख्यानं स्वमनसि स्थिरीकर्तुंते, स्मरणशक्तेरभावान्निर्बलत्वाच्च । अतो यदि यथा-कथंचित् फक्किकाव्याख्यानस्य मध्य-मापरीक्षाया निःसरणम्भवेत्तर्हि शिवं सुन्दरं स्यात्, माध्यमिकशिक्षापद्धतिप्रत्यूहपरिमार्जनं च भवेत् । फक्किकाव्याख्यानज्ञानं च । शास्त्र्याचार्यपरीक्षयोः सम्यग्भविष्यत्येव ।



# ❋ गीर्वाणवाणीविषयक-विचारधारा ❋

निबन्धा—श्री दीनानाथशर्मा शास्त्री सारस्वतः ।
( स० ध० संस्कृतकालेजाऽध्यापकः; मुलतान )



'प्र णो देवी सरस्वती वाजेभिर्वाजिनीवती । धीनामवित्र्यवतु'
—ऋग्वेदे ६ । ६१ । ४

## १ उत्तेजनम् ।



यि सुरसरस्वती सरस्वतीवगाहनाऽतिशयात्तनिर्म्मलशेमुषीघपुष्काः ! प्राप्तसनातनधर्म्ममर्म्मज्ञतामण्डितपूजनीयब्राह्मण पण्डितजनुष्काः । अद्य श्रीमतां समदां सधाष्ट्यं ससाहसं सचापलञ्च पुनर्गीर्वाण्या वाण्या विषये स्वविचारधारामुपन्यस्यतोऽस्य जनस्य यद्यपि धृष्टतामूलिका लज्जानिमज्जा जाजायमाना, तथापि कर्त्तव्यधुराधारणबाध्यस्य भवच्छुश्रूषकस्य दीनाऽनाथस्याऽस्य जनस्य मन्तुं क्षन्तुं श्रीमत्कमौदार्य्यम्—आशासे-कार्पण्यं न कलयेदिति । एतत्प्रस्तावप्रस्तावनां वाह्याडम्बरमण्डितामकुर्व्वाणोऽहं प्रकृतमनुसरन् श्रीमत्परिचर्य्यायामान्तरिकद्विनशब्दोपस्थापनलोभं संवरीतुमशक्नुवँस्तदुपक्रमधृष्टतामाकलये ।

महनीयमहिमानः ! अद्य जीवज्जाग्रत्स्वपि भवादृक्षेषु सुरसरस्वतीसेवकेषु सनातनधर्म्ममर्म्म विद्वत्सु च विद्वत्सु अद्यत्वे या देवगवीदशा तद्-दुरवस्थामूलकसनातनधर्म्मदशा च वेविद्यते,

सा न तिरोहिता भवेच्छ्रीमत्कसर्व्वदिक्क्ष हक्पथाद्दित्याशासानोऽस्मि श्रीमद्भिरप्यस्मिन्सम्बन्धे कतिकृत्वो विचारितं भवेदिति सुदृढमाशास्यते, तथापि कदाचिद्भवतां सर्व्वेषां भिन्नभिन्नदृष्टिकोणत्वाद् वा, समितिततिसमवेतताऽभावाद् वा, संस्कृतसँव्वादपत्रे भवदकम्पाऽनुकम्पाऽनवसराद् वाऽस्माभिरेतद्विषये श्रीमन्मतं किमपि न निर्द्धारयितुमपार्य्यत। तेन तान्तस्वान्ताः श्रीमच्चरणाऽरविन्दमिलिन्दायमाना बोभूयिषामहे। परं यावच्छ्रीमतामुत्तरपक्षोऽस्मद्दौर्भाग्याऽवशेषादस्मान् प्रति प्रतिपत्तुं विलम्बमवलम्बते, तावत् स्वकीयमेव प्राप्तकाटवपाटवं वाटथभाषितं पूर्व्वपक्षरूपेणोपतिष्ठापयिषामहे। अतस्योऽप्ययं मन्तुः सुसाधः स्यात् जन्तुमौदार्य्याऽतिशये सति।

सहृदयाः! भवत्स्वेके महामहोपाध्याया इतरे महामहोपदेशकाः, अनल्पाः शारदावृहस्पतिकल्पाः, बहवो वैयाकरणाऽऽभरणाः अरपेतरे तर्ककर्कशनैयायिकनायकाः, असङ्ख्याः साङ्ख्ये सङ्ख्यावन्तः, केचनाऽलङ्कारशास्त्राऽलङ्काराः, प्रभूता वेदपथपथिकीभूताः, प्रचुराः पुराण पुराणाऽभ्यासिनः, भूयिष्ठाः षड्दर्शनीपरिचयप्राप्तप्रतिष्ठाः, माज्याः ज्यौतिषलब्धसाम्राज्याः, भूयांसः शास्त्रार्थपाटवपटीयांसः, अदभ्रा वादिवादौघणाऽपसारणकृदभ्राः, अन्ये मीमांसामांसलप्रज्ञाः, अपरे लेखलेखनदृंपितगणपतिप्रभृतिलेखलेखाः प्राच्यपरिपाटीपटवो भूरयः सूरयः किल वर्त्तन्ति। तथाप्याश्चर्यम्—न सा गीर्व्वाणवाण्या विभा विभाति, न वाऽपि तन्मूलकसनातनधर्म्मशर्म्म दृश्यते। तस्या राष्ट्रभाषात्वस्वप्नस्तु दूराऽपेतः, तस्याः प्रारम्भिकोन्नामे एव प्रत्यूहव्यूहः पनीपत्यमानो दृश्यते। तत्कारणप्रवेके = विवेके श्रीमद्भिस्तु यत्किमप्यन्यदपि चिन्तितम्भवेत्, परमस्माभिस्तु श्रीमतां सङ्घटनराहित्यमेवैकं

तमत् कारणमनुभूयते, उपेक्षा चाऽप्यन्या। अन्यथा किं कारणं यद्-अस्मत्सिद्धान्तप्रतिपत्तिणां भिन्नभाषाप्रचारकाणां तु पक्षो दैनन्दिनं वरीवृध्यमानो निचाय्यते, परमत्र तु गृह एव विसंवादः। केचित् संस्कृतभाषाया राष्ट्रभाषात्वस्वीकारे एव विप्रवदन्ते, तत्सिद्धान्त-प्रचारणन्तु दूराऽपेतम्।

सनातनधर्मस्य संस्कृतभाषायाश्च भवदीदिक्षा भूरयः सूरयः खल्वेकत्र क्रियेरन् यदि; तत्र विपक्षिविद्वांसो विविधचिह्नचिह्निता अपि यदि भवदन्तर्निविष्टाः स्युः, तर्हि सुपरिगवेषणेनाऽपि ते दुरा-सदा वर्त्तेरन् इति वार्त्ता वर्त्तते भवत्संख्यायाः। यद्यभि-धीयेत यदस्मत्समाजे विचाऽसत्ता जागर्त्ति, वित्तमन्तरेण कार्यं कथं जायेत–एतदपि यत् किञ्चित्। धनकनक-मपि भवज्जनतायामेतावद् विद्यते, येन भवदीयाः सर्व्वे विपक्षाः सपरिवाराः सवस्त्राऽलङ्कारगृहाद्युपकरणाश्च दासत्वरूपेण क्रीयेरन्। तत्पुनः कथं भवद्विपक्षिणां प्रावल्यम्? कथं भवतां चीत्कारमपि को ऽपि न शृणोति, भवद्विपक्षाणाञ्च खलवोऽपि दिनत्रयान्तरे समग्रे भारतवर्षे प्रसेस्रीयते। अस्मद्विदूषां व्याख्यानवृत्तमपि सम्वाद-पत्रेषु न प्रकाश्यते। तेषां च नेतुः शिक्का [ छींक ] वृत्तमपि वृत्तपत्रेषु प्रकाश्यते हन्त! हन्त! न कदाप्यत्र भवन्तो विचार-यन्ति?। किं भवन्त एतदेव विचारयन्ति यद्–वयं स्वकीयां जीव-नयात्रां ससुखमति वाहयामः, किं नो ऽनागतेनेति?। हन्त हन्त!! निर्दयाः! स्वराष्ट्रभाषायाः संस्कृतगिरः स्वभाविसन्तत्याश्च कृते ऽपि कश्चित् त्राणोपायो भवद्भिरवलम्बितः? न किल विजानीथ यद्—युष्मदवलम्बभूतायाः संस्कृतभाषाया युष्मत्सन्तत्यांश्च निगरणाय याहा मुखं विवृत्य वितत्य वा कथमवस्थिताः सन्तीति। शिवशिव! भवद्भिस्तासां स्वसंस्कृतगी—पिपठिषूणां स्वसन्त

तीनां आधिश्राणाय संस्कृतसाहित्यरूपमसेद्यदुर्गं किं न निर्म्मा-स्यते ? । किं वर्त्तमानकाले विपक्षिविहिता ऽऽक्रमणानि विरोद्धुं रोद्धुं वा सङ्घटनशक्तिं न किल कलयिष्यथ यूयम् ? ।

कः स्वार्थो ऽ प्रेरयति 'संस्कृत' सम्पादकं श्री काली-प्रसादशास्त्रिणम् , य एतावदापत्तिकुला ऽऽकुले ऽपि समये संस्कृ-तभाषाया राष्ट्रभाषात्वनिर्माणाय पलमेकमपि न विश्राम्यति, सर्व्वसंस्कृतपत्रसम्पादकाँश्च तदर्थं प्रोत्तेजयति प्रोत्साहयति प्रेरयति च । यश्च विद्वत्सङ्घटनमापादयितुं 'विद्वद्वृत्तम्' प्रकाशयितुं सचेष्टो वर्त्तते, हानिं सोढ्वाऽपि स्वपत्रं साप्ताहिकं कृतवानल्प-मूल्यमादाय । इतस्ततस्तत्साहाय्याय धनमवाप्याऽपि तद्धनं स्वोदरस्थं न चिकीर्षति, न च तत् स्वकीयपत्रे व्ययीकरोति, प्रत्युत तद्धनविवरिणामे अन्येषां विदुषां पार्श्वे 'संस्कृत' पत्रं प्रेष्य स्वगृहे तस्माद् दानधनादर्धशिष्टामेककपर्दिकामपि न तिष्ठा-पयिषति । सत्यस्याऽपलाप ऽ केन क्रियतां नाम ? 'नहि कस्तूरि-कामोदः शपथेन विभाव्यते' । कथं स संस्कृतसाहित्यं प्रोज्जीवयितुं राष्ट्रभाषीकर्त्तुञ्च प्राणपणेनाऽपि चेष्टते, किं कदाचिद्विचिन्तितं भवद्भिः ? किं संस्कृतभाषा तस्यैव गृहभाषा, ना ऽन्येषां विदुषाम् ? किमु स संस्कृतगिरो राष्ट्रभाषात्वे घृतकुम्भं प्राप्स्यति, अपरे च विद्वांसो न ? । तर्हि अस्यां दिशि श्रीमन्तो ऽपि—आश्चर्य्यं—कथं न साहाय्यं परिश्रमं वा कलयन्ति ? । एतन्मार्गे श्रीमतां समाग-तिस्तु दूरे, प्रत्युत तत्र प्रचलन्तमपि तं भवन्त उपहसन्ति ? ।बत! एतद् दृष्ट्वा विषण्णताया ऽ प्राज्यसाम्राज्यं प्रसरीसरीति यद्भवत्सु बहवो महाभागा भवन्तं सङ्घटनाऽभावादेव चिरप्रसिद्धाऽस्म-च्छत्रूणां संस्कृतभाषिकसाहित्यचर्व्वणसपत्नानां सुधारकाभासाना-मेव कठोरदंष्ट्राभिराक्रान्तास्तद्-गृध्रा एव भवन्त एतत्सिद्धान्तस्य

द्विषन्तो दृश्यमाना निभाल्यन्ते। औदासीन्यं तु कथञ्चन सह्यं स्यात्—प्रत्युत विरुन्धाना एतं पन्थानञ्च कण्टकाकीर्णं कुर्वाणाः सन्ति। एष द्वेषवृक्षश्च कटुफलानि जनयन्नास्ते। हन्त! सुरसरस्वति! हन्त च सनातनधर्म्म! शोचनीयौ स्थो युवाम् एतेषां वलिना गृहकलिना। अदसीयदुष्फलमनुमिमाना अपि विद्वांसः स्वसङ्घटनं न स्पृहयेयुश्चेत्; तर्हि कस्त्राता स्यात् सुरसरस्वत्याः, कश्च सनातनधर्म्मस्य। 'कं यामः कं प्रति ब्रूमो गर-(विष-) दायां स्वमातरि'।

दयामयाः! आवेशविलसितमिदमपटु-बटुकटुवचः क्षमणीयमिति साञ्जलिवन्धं याचे। का का वा स्वव्यथाकथा भवदग्रे समुपस्थापयेयम्?। परमेतद्विचिन्तनीयं यत्- किमसत्यमिदम्। भवन्मुखसम्मुखे वचनीया चाटुपटुता शोभेत किम्। अस्माकमीदृशेण सङ्घटनेन भाव्यम्, यदस्मत्सम्मेलनं यां घोषणां चरीकरीतु, सा घोषणा देशे देशे, कोणे कोणे, पुस्तके पुस्तके, अक्षरे अक्षरे च प्रसेस्रीयमाणा दृश्येत। परमद्या ऽस्माकं साहित्यादन्यथात्वमेव जङ्गन्यते। तेषामेव शब्दाः प्रतिकोणं प्राप्नुवन्ति, वयं कतिपयदिवसकृते तेषु उपहसामः, पुनर्मौनिनो भवामः क्रमशश्च नतमूर्द्धानः सन्तो वैवश्येन तदनुगामिनो भवामः। हा हन्त! इतोऽप्यधिकोऽस्माकं कोऽपि मृत्युर्भवितुमर्हति?। स्थाने स्थाने स्ववद्धश्रद्धया जनतयाऽपि वयं न्यक्-क्रियामहे, देशस्य कण्टका वयं मन्यामहे, घृणास्पृशा दृशा वयं दृश्यामहे, अपभाषणैर्व्वयं सत्-क्रियामहे (?), सुरभारतीरतिनिरतत्वेन वास्तविकदेशभक्ता अपि देशशत्रवो वयं मन्यामहे, तथापि वयं मृष्यामहे। हन्त! क्षमायो अपि कोऽप्यवधिर्व्वर्त्तते भवदीयाया नो वा?। 'क्रियासमभिहारेण विराध्यन्तं क्षमेत कः?' किमिमा-

मुक्तिं नाऽनुकरिष्यथ यूयम् ? । परं कदैवं भवेत् ? तत्रैतदेवोत्तरम्-यावत् स्वसङ्घटनं न भवेत्, तावदेतन्न भवितुमर्हति-'तुषेण हि परिभ्रष्टा न प्ररोहन्ति तण्डुलाः' । तस्याः संहत्या एकमात्रमुपायोऽयं यद्-'अस्यामेव शताब्द्यां संस्कृतं राष्ट्रभाषा भवेद्' अयमेवोद्देशः श्रीमद्भिरुद्घोषणीयः । अस्या एव पताकायाश्छायायामागतवतां भवतामेकता निरूढमूला स्यात् ।

अद्य यदि कस्यचिद् धर्मविघातकस्य संस्कृतभाषाविद्वेष्टुरभिनन्दनार्थं विशेषाऽङ्कः कस्यचित्सुधारकपत्रस्य प्रचिकाशयिषितोऽभविष्यत्, तर्हि तत्सम्पादकपार्श्वे अप्रार्थनायामप्येतावती लेखसामग्री सञ्जिताऽभविष्यद् यत्-सहस्रपृष्ठात्मके कृतेऽपि विशिष्टाङ्के लेखसामग्री अवशिष्टाऽस्थास्यत्, तदप्रकाशनार्थञ्च लेखकाः क्षमामभ्यार्थयिष्यन्त । परं हन्त ! हन्त ! अद्य तस्याः-स्वमातुर्गीर्वाण्या वाण्याः- यया कदाचिदस्मद्भारतवर्षं स्वर्गायितं कृतम्-या चाऽद्याऽप्यस्माकं जीविकां निर्वहति- तस्या एव राष्ट्रभाषात्वविधानाय 'संस्कृत' सम्पादको विशिष्टपरिशिष्टाङ्कं प्रचिकाशयिषति, तदर्थञ्च संस्कृतपत्रे कतिचन सूचनाः प्रकाशयति, पत्रद्वारा च विदुषस्तस्या राष्ट्रभाषात्वसाधकलेखप्रेषणाय पृथक् प्रार्थनाश्च करोति तथापि तेषामेव विदुषां-येऽनया गैर्वाणवाण्या स्वजीविकां निर्वहन्ति, यया च परमप्रसिद्धिकोटिमारोपिताः= कर्णाभ्यां बधिरतैव न व्यपगच्छति, चक्षुर्भ्यां तिमिरपटलमेव न गलति, करे च द्वित्रशब्दलेखनाय, लेखन्यपि न जिगमिषति ? हा !- इतः परं पतनस्य परा काष्ठाऽन्या कीदृशी भवेन्नाम ? । मद्विचारे तु सर्वस्याऽस्य उपप्लवस्यैकमात्रं प्रधानं निदानम् अस्मदीयसङ्घशक्तिराहित्यमेव नाऽन्यत् । अस्मत्सङ्घशक्तिराहित्यादेव अस्माकं स्वकीयेष्वेव प्रभावो नो पतति, इतरेषु तर्हि कथं स्यात् ? । अस्मत्सङ्घटनराहित्या-

देवाऽस्मदीयधनग्रन्थयोऽस्मदीयविपद्दीणां कोशान् गच्छन्तो दृश्यन्ते, वयञ्च दैन्यदारिता बुभुक्षाग्रस्ता एव भवामः। इतरभाषिकाः परश्शतरूप्यकवेतनान्यासाद्य स्वविविधविलाससामग्री राशी—कुर्वते। ससन्ततयो वयं तु स्वसंसर्गाङ्गीणवस्त्रैरप्यनाच्छादिताऽवयवा दशद्वादशरूप्यकवेतनाऽऽसरयर्थञ्च व्याकरणाचार्य्या अपि विद्यालयाद् विद्यालयान्तराण्योर्हिण्डामहे। अहह! अदूरदर्शिनः! किं भविष्यच्चिन्ता न बाधते युष्मान्? । जनता धनग्रन्थीनमुष्मै दास्यति, यस्तद्धितचिन्तको भवेद्, न केवलतद्धितकृदन्तचिन्तकः। हितचिन्तका भवन्त एव तदीयाः। इतरे च सुधारकाभासास्तस्या गर्त्ते निपातकाः। परं जनता तेभ्य एव धनं प्रयच्छति, यतस्ते बहिर्वल्गुफल्गुवाचा लेखेन सङ्घटनेन च तादृशेणेत्थमाटोपं प्रदर्शयन्ति, यद् वस्तुतस्त एव तस्या हितैषिणो भवेयुः। सदागतिमतिशयानः सुधारकमरुच्चरो जनताचक्षूंषि धूलिप्रक्षेपं कुर्व्वाणोऽग्रेऽग्रे गच्छति, तथापि तत्सौन्दर्य्यमदमत्ता जनता तेनात्मानं रजस्वलीभूतां न जानीते। परं भवन्तस्तद्वास्तविकहितैषिणोऽपि तच्छत्रूयिता मन्यन्ते तत्रैकमाद्यं कारणं मिथः सङ्घटनाऽभावस्तन्मूलकप्रचारप्राचुर्य्याऽभावः साहित्यनिर्म्माणाऽभावश्च। तद्दोषशोषे कृते जनता भवत्कृते वदान्यवरेण्या भविष्यति। आशासे-इह दिशि भवन्तोऽवश्यमवदध्युः।

## २ (क) संस्कृतपत्रिकापरिचयः।

पत्रपत्रिका भाषायाः प्राणा भवन्ति। भाषायाः प्रसाराय राष्ट्रभाषात्वाय वा पत्राणां कृपाऽवश्यं कारणीभवति। अद्य यावद् यैः पत्रैः संस्कृतसंसार उपकृतः, तद्वर्णनमावश्यकमिति मत्वा पत्रिकाणां परिचयो वितीर्य्यते। तत्र 'सुप्रभातं' सूर्य्योदयः, 'संस्कृतम्' 'श्रीः' 'संस्कृतरत्नाकरः' 'अमरभारती' 'वल्लरी' 'कालिन्दी' 'मधुरवाणी' इत्यादिभिः पत्रिकाभिः १९८१ वैक्रम-

संवत्सरात् संस्कृतसंसारस्य बहूपकृतम् उपक्रियते च । संस्कृतपाठकानां ज्ञानाय एषा गुणदोष विवेचना संक्षिप्योपस्थाप्यते ।

**सुप्रभातम्** । इदं पत्रं १९८१ वैक्रमे काशीतः प्रकाशितम् । अस्य मूल्यं विद्यार्थिभ्य एकरूप्यकम् । वर्त्तमानसंस्कृतपत्रप्रसारणेऽस्यैव श्रेयः । अस्य प्राक्तनाऽङ्कस्य सम्पादकाः श्री पं० देवीप्रसाद शुक्लकविचक्रवर्त्तिनोऽभवन् । ततः श्रीविन्ध्येश्वरीप्रसादशास्त्रिमहोदयोऽस्य सम्पादकतामवहत् । तदनन्तरं श्रीगिरीशशुक्लन्यायाचार्य्यमहोदयस्य सम्पादकतायामिदं प्राचलत् । ततः श्रीकेदारनाथसारस्वतमहाशयस्य सम्पादकतायामिदं स्थितम् । पत्रेणाऽनेन प्राक्तनसम्पादकानां समये सनातनधर्म्मस्य नीतिर्निष्पक्षता च स्थापिता । अन्तिमसम्पादकस्य च सम्पादकतायामनेन सुधारकसनातनधर्म्मनीतिरवलम्बिता । समये २ विशिष्टाङ्कप्रकाशनमपि जातम् मूल्यमपि च १॥) जातम् । संस्कृतमस्य सरलं स्थितम् । आकारप्रकारश्चाऽस्य हृदयङ्गमः । मध्ये मध्ये ऽनेन वारद्वयं विश्रान्तिराप्ता । ततः पाक्षिकतामभिनयत् ततः पुनर्मासिकतामस्प्राक्षीत् । तत्र वर्षद्वयं चलित्वा पुनरनेन गतवर्षतो विश्रान्तिं प्राप्तं । अधुनाऽस्य दर्शनं न भवति, न जाने जीवति वा, न वा ।

**सूर्योदयः** । इदं पत्रं १९८२ वैक्रमे पाक्षिकत्वेन काशीतः प्रकाशितम् । अस्य मूल्यं तदा विद्यार्थिभ्यो द्वादशानकाः ॥।) । 'सुप्रभात' स्यैव पूर्वसम्पादकः श्रीविन्ध्येश्वरीप्रसादमहोदयोऽस्य सम्पादकोऽभवत् । इदं पत्रं भारतधर्म्ममहामण्डलेन प्रकाशितम् । नीतिरस्य आरम्भादद्य यावत् शुद्धसनातनधर्म्मस्य स्थिता । लेखाः पठनार्हा मननाऽर्हाश्च भवन्ति; मुद्रणं समीचीनम् । ततश्चतुर्थे वर्षे श्रीविन्ध्येश्वरीप्रसादशास्त्री एतस्मात्स्वसम्पादकता-

सम्बन्धं व्यच्छिनत्। ततः श्रीमदवधेशप्रसादद्विवेदिमहोदयस्य सम्पादकत्वे इदं प्राचलत्। मूल्यञ्चाऽस्य विद्यार्थिनां कृते पञ्चरूप्यकमभवत्। पञ्चमवर्षतो मासिकत्वमस्पार्क्षीत्। निरवच्छिन्नं प्रचलनो 'भूमौ स्थितस्य पतनाद् भयमेव नास्ति' इति सिद्धान्तमवलम्बमानस्या ऽस्या ऽधुना द्वादशं वर्षं वर्त्तते। १९१३ वत्सरे "सूर्य्योदयो" विप्लवचक्रे ऽपप्तत्। अद्यापि तत्-क्षतिपूर्तिर्न जाता।

**संस्कृतम्।** इदं पत्रं १९८७ वत्सरे अयोध्यातो मासिकत्वेन प्रकाशितम्। अस्य मूल्यं १।) रूप्यकम्। प्रागस्य लक्ष्यं समस्यापूर्त्तिप्रकाशनमासीत्। ततश्शनैः शनैर्गद्यलेखा अपि प्रकाशयितुमुपक्रान्ताः। तत ऽ पञ्चमवर्षान्ते उत्साहिनः सम्पादकस्य प्रयत्नेन पाक्षिकतामशिश्रियत्। मूल्यञ्च रूप्यकद्वयमभवत्। ततश्च षष्ठवर्षारम्भतः साप्ताहिकतामूरीकृतवत्। इत्थं शनैश्शनैरुन्नमत् सत् सप्तमवर्षे 'राष्ट्रभाषाऽङ्कं' प्रकाश्य ख्यातिमुपेयिवत्। ततो ऽधुना परिशिष्टाङ्कं प्रकाश्य श्रीमद्धस्ते समार्पिपत्। अनेन 'अस्यामेव शताब्द्यां संस्कृतं राष्ट्रभाषा भवेद्' इति महाकठिन उद्देशः स्वकीयः स्थापितः; तत्पूर्त्यै च यथासम्भवमुद्यच्छते। नीतिरस्य शुद्धसनातनधर्म्मस्य। सम्पादकमहोदयेन सूचितं यद् मूल्यमस्य रूप्यकत्रयं क्रियेत यतः नाऽस्मिन् मूल्ये साप्ताहिकपत्रं दातुं शक्यते। वस्तुतः साप्ताहिकपत्रं रूप्यकद्वयेन प्रचलने सति महतीं हानिमासीदतीति भुक्तभोगानामनुभवविषयः। सम्पादकः श्रीकालिप्रसादशास्त्री।

**'श्रीः'।** इदं पत्रं १९८८ वत्सरे त्रैमासिकत्वेन श्रीनगर (कश्मीर) त ऽ प्रकाशितम्। अस्य मूल्यं १।)। सम्पादकः—श्रीकुलभूषणमहाशयः। अस्य पत्रस्य मुद्रणं प्रकाशनञ्च सर्व्वाङ्गसुन्दरम्, परं किञ्चिदशुद्धिसङ्कुलम्। अस्य नीतिः सुधारकाऽऽर्य्यसमाजस्य। इदं पत्रं सनातनधर्म्मार्य्यसमाजबौद्धादीनां सर्व्वेषामेव लेखान् प्रकाशयति। उत्तरपक्षञ्च सुधारकमतस्य

स्थापयति । परं पूर्व्वपक्षस्याऽप्यवहेलनं न विधत्ते, किन्तु सम्मानेन तस्मै स्वपृष्ठान्यर्प्पयति । अस्य पत्रस्योद्देशः संस्कृतभाषाऽऽर्य्यसभ्यतारक्षार्थं प्रचारः । पत्रत्सम्पादक उत्साही कार्य्यकर्त्ता । अस्य पत्रस्य प्रचलतः षष्ठं वर्षं वर्त्तते ।

**संस्कृतरत्नाकरः** । इदं पत्रं १९८१ वत्सरे जयपुरतः प्रकाशितम् । अस्य मूल्यम् २ । सम्पादकः श्रीसूर्य्यनारायणशास्त्री भट्टमथुरानाथशास्त्री च । प्रकाशको म० म० पं० गिरिधरशर्म्ममहोदयः । इदमस्य पत्रस्य द्वितीयसंस्करणम् । प्राग् दशवर्षाणि प्रकाशकस्यैव सम्पादकत्वे प्रकाशितम् ततो यूरोपीयसमरकालेऽस्तमितम् । आधुनिकसंस्कृतपत्राणां मार्गप्रदर्शकं प्रवर्त्तकञ्चेदमेव पत्रम् । नीतिरस्य तटस्था, साहित्योपोद्बलिका सनातनधर्म्मस्य मण्डिका च । अस्मिन् विलम्बदोष आरम्भादेव जातो येन एकवर्षस्य न्यूनता जाता । अग्रन्वे पञ्चमवर्षस्थानेऽस्य चतुर्थवर्षं वर्त्तते । अनेन 'आयुर्वेदाङ्कः' 'वेदाङ्कः' इति बृहत्कायं विशिष्टाङ्कद्वयं प्रकाशितं यत् संस्कृतसंसारे स्थायिवस्तु । अधुनाऽस्य एक एव प्राक्तनः सम्पादकः । अधुनाऽस्य मुद्रणं पूर्व्वाऽपेक्षया समीचीनम् । इदमधुना नियतमासान्ते नियमेन प्रकाश्यते ।

**अमरभारती** । इदं १९९१ वर्षे मासिकत्वेन काशीतः प्रकाशितम् । मूल्यं विद्यार्थिनां कृते २) । अस्य गणनीयः कार्य्यकर्त्ता सम्पादकः श्रीनारायणशास्त्री खिस्ते साहित्याचार्य्यमहोदयः । इयं राजकीयपत्रिका अस्या मुख्यनीतिः साहित्यवर्द्धिका सनातनधर्म्ममण्डिका च । मुद्रणादिमाकारप्रकारश्चाऽस्याः शोभनतां गाहते । अस्या द्वितीयवर्षं समाप्तं जातम् । अधुनेयं 'मासिकी तिष्ठेयं त्रैमासिकी वा स्याम्' इति चिन्तासन्ताननितान्ततान्ता प्राचीनं सञ्चालकं म० म० श्रीगोपीनाथकविराजमहोदयं विहाय नव्यं प्रतीक्षते । आशास्यते-अस्याः पूर्व्ववत् सर्व्वाङ्गसौन्दर्य्यं तिष्ठेत् ।

वल्लरी । इयं पत्रिका १९९२ वर्षे काशीतो मासिकरूपेण प्रकाशिता, मूल्यं रूप्यकद्वयम् । अस्या गणनीयः सम्पादकः श्रीतारा दत्तपन्तः साहित्याचार्य्यः । अस्या नीतिर्निरपेक्षा सनातनधर्म्मगृह्या च । इयं सुन्दरी पत्रिका । अस्याः प्रत्यङ्कमेकं चित्रं भवति । मुखपृष्ठमपि सदा 'आर्टपेपरे' सचित्रं कमनीयं भवति । मध्यम-पत्राणि रूक्षाणि । अस्यां यावन्तो गुणाः, तावन्त एकेन विलम्ब-रूपेण महादोषेण तिरोहिताः । अद्याप्यस्याः पत्रिकाया एकं वर्षमपि पूर्णं न जातम्, ९ संख्यान्तं प्रकाशिता । अग्रेऽस्या जीव-नविषये न किमपि ज्ञायते ।

मधुरवाणी । इयं पत्रिका १९९३ वत्सरे वेलगामतः ( कर्णाटक ) प्रकाशिता । प्राक् पाक्षिकी अधुना तु मासिकी । मूल्य-मस्या रूप्यकद्वयम् । अस्याः सम्पादकः- श्रीरामाचार्यः श्रीनिवा-साचार्य्यमहोदयश्च । ३२ पृष्ठात्मिकेयं लम्बाकारवती सदा निय-मिततिथौ प्रकाश्यते । अस्याः सूक्ष्मा मुद्रा, यत्र पर्य्याप्ता लेखाः प्रकाश्यन्ते । संस्कृतमस्याः प्रसन्नमधुरं क्वचन समासबहुलञ्च । अस्या नीतिः सनातनधर्म्मस्य साधिका, निष्पक्षा च । दक्षिण-भारते इयमेकाकिनी स्वकार्य्यं पुष्णती वर्त्तते । अधुनाऽस्या द्वितीयवर्षं प्रचलद् वर्त्तते ।

कालिन्दी । इयं पत्रिका १९९३ वत्सरे आगरातः प्रकाशिता । १) मूल्यम्, अस्याः सम्पादकः- श्रीहरिदत्तशास्त्री । प्राक् त्रैमासिकी ततो मासिकी । इयमार्यसमाजस्य पत्रिका, परं नीतिर्निष्पक्षा । आरम्भात् सङ्ख्याद्वयमस्या दृष्टम् । ततोऽग्रेऽस्या वृत्तं नाऽधिगतम् ।

## २ (ख) अस्तमितपत्राणि ।

सहस्रांशुः । इदं पाक्षिकपत्रं काश्यां 'सूर्य्योदय' प्रकाश-

नानन्तरं श्रीगौरीनाथपाठकसम्पादकत्वे प्रकाशितम्। एकाऽर्द्धवर्ष-प्रचलनानन्तरं पुनरिदमस्तमितम् ।

**उद्योतः** । १९२८ ई० वत्सरे पं० नृसिंहदेवशास्त्रिसम्पादकतायामयमुदितो लवपुरात्। इदं पत्रं वाह्याभ्यन्तरतः सुन्दरमासीत्। परं तदधिकारिणां मिथोभेदवशादेकं वर्षं सम्पूर्य्याऽस्तमितम् ।

**ब्राह्मणमहासम्मेलनम्** । इदं सनातनधर्म्मस्योत्साहिकार्य्यकर्तॄणां म० म० श्रीलक्ष्मणशास्त्रिणां तत्त्वाऽवधाने प्रकटीभूतं १९८५ वैक्रमनिकटे। इदं शुद्धसनातनधर्म्मनीतिमशिश्रियत् । परं सनातनधर्म्मिजनताया औदासीन्येन पञ्चवर्षाणि स्वप्रभां प्रकाश्य निलीनम् ।

**अमरभारती** । १९२९ वत्सरे 'अमृतसर' तः श्रीसीताराम शास्त्रिणः सम्पादकत्वे निःसृता। इयमप्युदीयमानपत्रिकाऽलक्ष्यत । परं तत्सम्पादकस्य तत्रत्यविद्यालयत्यागादियमात्मनः संख्यात्रयं प्रकाश्य दीर्घनिद्रामाश्रयत् ।

**पीयूषपत्त्रिका** । नडियादनगरात् प्रकाश्यते स्म बृहदाकारा चित्राण्यप्यस्यां भवन्ति स्म। परं मूल्याधिक्य कारणादस्याः प्रचारो यथाचम्न जातः। तेनेयमप्यस्तमिता।

## २ (ग) अन्यपत्त्राणि।

**संस्कृतसाहित्यपरिषत्** । इयं मासिकी कलिकत्तायां चिरात् प्रकाश्यते । प्राक् श्लथिमानमापद्यत—अधुनाऽदसीयप्रबन्धः श्रेयान् श्रूयते ।

**मञ्जूषा** । इयमपि लघ्वाकारा पूर्व्वपत्त्रिकायाः सम्पादकस्याऽध्यक्षत्वे मासिकत्वेन प्रकाश्यते स्म। अधुना श्रूयते यदीयं

साप्ताहिकी जाता। परं न जाने प्रकाशिता भवति न वा। वार्षिकं मूल्यं मुद्राचतुष्टयम्।

पाठका विमृशन्तु, यदीयं ४) मूल्यं विभर्त्ति। वस्तुतः 'संस्कृत' पत्रं यत् साप्ताहिकत्वेऽपि रूप्यकद्वयं गृह्णाति, तत्राश्चर्यं भवतिस्म, यतो रूप्यकद्वयमूल्ये पुनश्च साप्ताहिकत्वे ऽनल्पा क्षतिः सोढव्य भवति। अतश्च कियन्तिचित् पत्राणि 'संस्कृत' पत्रसम्पादकाय रुष्टान्यप्यासन्, यदू—भवत ~ पत्रं साप्ताहिकम्, इतश्चाऽल्पमूल्यम्, अत एव ग्राहका एतदेव बाहुल्येन गृह्णन्ति, अस्माकं पत्रश्चा ऽल्पप्रचारं जायते। एतदादिक कारणात् 'संस्कृतं' पत्रमपि स्वमूल्य वृद्धौ सचेष्टमजनि। परं मद्विचारे मूल्यवृद्धौ तस्य ग्राहका अवश्यमल्पा भवेयुः। यतो ऽद्यत्वे को ऽपि किमपि संस्कृतभाषिक पत्रं रूप्यकद्वयेना ऽपि न जिघृक्षति, का कथा रूप्यकत्रयेण तच्चतुष्केण वा। तत्रापि हानिस्तथैव तिष्ठति, अत्र सम्पादकमहाभाग ~ प्रमाणम्।

## २ (घ) प्राचीना ऽर्व्वाचीनपत्रस्मृतिः।

भूतपूर्व्वाणां विद्योदय—सहृदया—मञ्जुभाषिणी-शारदा-संस्कृतरत्नाकर- संस्कृतचन्द्रिकोषा- सूनृतवादिनी- मित्रगोष्ठी- सूक्ति-सुधा-सद्धर्म्माऽऽर्यप्रभा-विद्वत्कला—विज्ञानचिन्तामणि — काशी-विद्यासुधानिधि-बहुश्रुतप्रभृतीनां, वर्त्तमानानां मीमांसाप्रकाश पूना-पद्यवाणी कलकत्ता-उद्यानपत्रिका मद्रास-श्रीमन्महाराजपत्रिका मैसूर प्रभृतिपत्रिकापरिचयो नाऽस्माकम्। अत एव संस्कृतपत्रेति-हासो ऽत्रैव समाप्यते। संस्कृतपत्राणां यावदुन्नतिर्भवेत्, तया संस्कृतवाण्या राष्ट्रभाषात्वस्य प्रश्नः शीघ्रं प्रपूर्येत।

## ३ परीक्षा प्रणालीगुणदोषविवेचना।

अस्मिञ्जगति यस्मिन्नपि पदार्थे उत्तमे ऽधमे वा विमर्श-स्पृशं दृष्टिं प्रवर्त्तयामः, तत्रैवा ऽस्माभिर्गुणा दोषाश्च परस्परं नान्तरी-

यत्कथा वर्त्तमाना निभाल्यन्ते। क्वचिद् गुणानां भूमा दोषाणाञ्चाऽणिमा, क्वचन च दोषाणां बंहिमा गुणानाञ्च ह्रसिमा विराजेतेति त्वन्यत्। परमेकमेव वस्तु केवलं सगुणं निर्दोषञ्च, केवलं सदोषं निर्गुणञ्च, कदाचिद् दृग्गोचरी- चरीक्रियमाणं न भविष्यतीति सभ-सम्मतं मतं मतम्। आशास्यते-युक्तियुक्ते सर्व्वानुभवविषये विषयेऽमुष्मिन् प्रायो न भवितुमर्हेद् विसंवाद ऽ कस्याऽपि निशित मनीषाशालिनोऽपि। विकीर्य्यतां दृष्टिकोण इतस्ततः- नितान्त-तान्तस्वान्तशान्तताकर्त्तरि सुधांशो सितिमा ऽऽह्लादकत्वं सौन्दर्य्यञ्च-इमे गुणाः सन्ति, दोषो ऽपि तत्र लाञ्छनरूपेण विराजत एव। असौ दोष एव तस्य गुण विकासे सहायकः स्यादिति त्वन्यत्, परं स वर्त्तते दोष व्यपदेश्य एव। विदूषकस्य काण त्वमपि वा वामन त्वमपि वा तस्य हास्यरसप्राचुर्य्यस्य सहायकं सदपि दोषव्यपदेशभागेव। पाटलपुष्पं सुगन्धादिना चेतोहारि भवति, परं कण्टकास्तत्राऽपि स्वस्वत्वं न जातु हातुमीशते। प्रसिद्धसुख-खनौ स्वर्गे ऽपि 'क्षीणे पुण्ये मर्त्युलोकं विशन्ती' ति दोषोपि आगत्यैव।

अस्पृश्यादिदोषदिग्धो ऽपि श्वा स्वामिभक्त्यादि गुणगण विशिष्टो ऽपि भवति। कृष्णोऽपि कोकिल ऽ काकलीकलकलैर्हृद-यप्रमन्दानन्दकन्दलं वितनुते। चर्म्ममय्यप्युपानत् कण्टकेभ्यो रक्षा मुन्नतानत प्रदेशारोहणे सहायतां, वृश्चिकानां विनाशञ्च कुर्व्वती गुणिगुणगणगणनीयैव।

किम्बहुना—'दोष' शब्दो ऽपि 'गुण' युक्तः ( यतो दुष-धातोर्घञि लघूपधगुण एव दोषशब्दनिष्पत्तिः )। एवञ्च 'गुण' शब्दो ऽपि 'दोष' युक्तः, यतः स गुणव्यपदेशं वहन्नपि गुणयुक्तो नास्ति, किन्तु अगुणः ( अदन्तगुणधातोरल्लोपे तस्य स्थानिवत्त्वेन गुणो न भवति )। अगुणो दोषश्चेति मिथ ऽ पर्य्यायावेव। फलतः

सर्व्वमपि सगुणं किञ्चिद् दोष युक्तमपि, सर्व्वमपि सदोषं किञ्चिद् गुणयुक्तमपि भवति। नाऽत्र 'ननु न च किन्तु परन्तु—' इत्यस्य प्रयोजनीयता। तदेवमेवाऽस्मदीयसमालोच्या श्रीमती परीक्षा-देऽयपि ताद्वक्कोटितो न वहिर्भूता, दोषगुणगतिमतिक्रम्य वा न वर्त्तते। तथापि तत्रेदं विमर्शनीयं यत्—परीक्षायां गुणानां वाहुल्यं दोषाणामणीयस्त्वं वा, आहोस्विद् दोषाणां प्राचुरी गुणानां नैयूनी वा वर्व्वर्ति अथ वेदमेव वाच्यं यद्—अमुष्यां के दोषाः के वा गुणाः। वयं मितमतिद्वारा संक्षिप्य विवृणमहेऽमुं विषयम्। अत्र गुण दोषयोः कस्याऽतिरेक इत्यस्योत्तरपक्षे वयं पाठकानां शेमुषीमेव निदध्मः।



परीक्षायामयं महान् दोषो जाजायते यत्-समयपारिमित्य-कारणाद् विद्यार्थिनः पुस्तकानि कार्त्स्न्येन न पठन्ति, किन्तु परीक्षोपयुक्तस्थलानि। तत्राऽपि व्युत्पत्तिस्तेषां न भवति, केवलं परीक्षोत्तरण निमित्तमेवाऽध्यापकद्वारा तत्र चिह्नानि संयोज्य तत्पाठं घोषणविषयी कुर्व्वन्ति। अत एव परीक्षायां केवलमुत्तीर्णताया विचारः स्वाभाविको भवति, न खलु योग्यतायाः। परिमितसमय एव परीक्षा प्रवेष्टव्या भवति। भवति च तत्र पुस्तकानां विषयाणां वा बाहुल्यम्, तर्हि पुस्तकानां कथञ्चिदाघ्राणमात्रमेव कर्त्तव्यम्भवति, न तेषां साकल्येनोहापोहपूर्व्वकमालोडनम्। अध्यापका यदि योग्यतावर्द्धनार्थं सर्व्वञ्चित्पुस्तकं विपाठयिषेयुः, अथवाऽन्यत् तत्सम्बद्धमवबुबोधयिषेयुः, परीक्षालुब्धास्तत्रोपेक्षन्त एव। अत एव परीक्षाप्राप्तशिक्षायाः स्थायिप्रभावो न तिष्ठति। इतश्च नवीनश्रेणीप्रवेशे च प्राक्तनश्रेण्या ग्रन्था विस्मर्य्यन्ते, तत्र कारणमापातत एव ज्ञानस्य घोषणस्य च। घोषणेन मस्तिष्कस्य यादृशी क्षीणता जायते, सा नाऽविदिता तद्व्यसनिनाम्। इतश्च परीक्षाया मुख्योद्देश्यं भृतिविधानमेव नियतीभूतम्। योग्यतारूपं यदुद्देश्यमपि

क्षितमासीत्, तच्च व्यसमर्थ्यत। परन्तु परीक्षाणां परीक्षितानाञ्च बाहुल्याद् भृतिप्राप्तिरपि दुरापा जाता, ततो योग्यताऽपि गता, भृतिरपि न प्राप्ता, इतश्च स्वधर्मज्ञानमपि गतम्, इतश्च परीक्षामात्रप्रवेशवशात् कार्य्यान्तरकरणेकुशलताऽपि विध्वस्ता। ईदृशा जना भारतभूभारभूता जायन्ते। ईदृशा अपि जनाश्चेत् संस्कृत-भाषाया राष्ट्रभाषात्वविधाने एव आन्दोलनानां सृष्टिं कुर्युः, तथापि कथञ्चित् सम्मानास्पदं भवेयुः। समाचारपत्रेषु लेखानेव प्रकाशयेयुः, तथापि संस्कृतभाषावृद्धिकरा आख्यायेरन्। परं योग्यताऽभावात्तादृशाः परीक्षाप्रिया 'इतो भ्रष्टस्ततो नष्टः' इति न्यायोदाहरणी भवन्तः संस्कृतभाषानिन्दन एव कारणीभवन्ति। तेषां योग्यतापरिचायकं परीक्षाप्रशस्तिपत्रमेव केवलं भवति, तन्मात्रमेव प्रपद्य हर्षं प्रकर्षसन्निकर्षमश्नुवते।

अन्यदपि दृश्यताम्—परीक्षायामयमपि महान् दोषो यत् परीक्षाभिन्नसाहितीप्रचारो न जाजायते। परीक्षानियतग्रन्थाँस्तु क्रियासमभिहारेण पश्यन्ति जनाः, ग्रन्थान्तराणि तु योग्यताधायकान्यपि तैरस्पृश्यानीव मन्यन्ते। तर्हि ते सीमितपुस्तकानामेव पण्डिता भवन्ति, अदृष्टचराणां पुस्तकानां लापने तेषामशक्तिरेव जृम्भते। तेनेमाः परीक्षा घृतबिन्दुमिवाऽम्भसि बुद्धिं सङ्कुचितामेव विधापयन्ति। अथ च कश्चन उत्साही यदि नव्यकाव्यं प्रकाशयति चेत्, परीक्षालुब्धानां तत्रौदासीन्यात् कोऽपि तज्जिघृक्षुर्नोदेति। एवञ्चोत्साहिनामुत्साहः शीघ्रमेव नश्यति। परीक्षायां नैयत्येऽपि काठिन्यं भवति, यावद् विश्वविद्यालयीय पुस्तकनियामकानां चाटुपटुता, नेभ्य उत्कोचदानं, तदीयोदरपूर्त्तिः, तैः सह सम्यक् परिचयश्च वा न भवेत् तावन्नव्यकाव्यं तत्र नियमयितुं न शक्यते, तस्य काव्यस्याऽऽस्वादमन्ते उपजिह्विकाजिह्वा एव गृह्णन्ति।

अथ च परीक्षा भोविधनाऽर्जनमुद्दिश्यैव प्रविश्यन्ते, न तु

संस्कृतविद्याप्राप्त्युपाय इमोः, यद्वा—संस्कृताऽध्ययनमस्मत्कर्त्तव्यमिति धिया वा। तत्फलमेतद्भवति यत्—अन्तिमपरीक्षोत्तीर्णतायाअध्यापकताऽलाभेन स शोकभाग्भवति, विचारयति च, यद्—छात्रत्वे तु तेषु भोजनमपि सुलभमासीद्, अधुना तदपि दुरापमजनि, एतस्या उत्तीर्णतायास्तु अनुत्तीर्णतैव श्रेयस्यासीद्। इत्थं स्वविद्यावृद्धावसन्तुष्टा धनमेवाऽन्तिमयुद्देश्यमध्यवस्यन्ति। अथ च वर्त्तमानपरीक्षाः स्वास्थ्यविनाशिन्यः, चारित्रविकारिण्यः, कपटपाटवशिक्षयित्र्यः, ईर्ष्यालोभचिन्तादिवर्द्धयित्र्यो धनानां नाशयित्र्यो योग्यताविरहयित्र्यो मातापित्राचार्य्यादिभक्तिविस्मारयित्र्यो भवन्ति नात्राऽत्युक्तिलेशः।

## अधुना परीक्षागुणविवेचनाऽऽरभ्यते—

अद्यत्वे आवश्यकता बाहुल्यसत्त्वान्निजविधेयव्यापृतमनस्काः पुमांसः किमपि संस्कृतसाहित्यपुस्तकं न दिदृक्षन्ते, न वा द्रष्टुं पारयन्ति। परीक्षाव्याजेन तु अध्ययनमध्यापनं वा द्वारीकृत्य तत्पुस्तकस्याऽऽमूलचूडं दर्शनाऽवसरः प्राप्तुं शक्यते। एतस्य प्रबलप्रमाणमेतदेव यद्—अध्यापका विद्यार्थिनश्च परीक्षाऽतिरिक्तसाहित्यं पश्यन्त्येव न। यस्य पुस्तकस्य विश्वविद्यालयद्वारा परिवर्त्तितस्य पञ्चपाणि वर्षाणि व्यत्ययुः, अथवा यत्पुस्तकं कदापि विश्वविद्यालयेन न निर्यामितम्, अत एव यत्पुस्तकं वयं न विलोकयामो न वाऽवलुलोकयिषामः, तदेव पुस्तकं यदि विद्यालयसंस्था संस्थापयति निर्वाचयति वा परीक्षायाम्, तदाऽवश्यं तदवलोकने बाध्या भवामः, तदपदेशेनैव तत्पुस्तकं कात्स्न्येनैव दृश्यते।

अन्यच्च यः खलु व्याकृत्यादिविषयो द्वादशभिर्वर्षैः प्राक् समाप्यते स्म, स एव परीक्षार्थिना षड्भिरेव वर्षैः समाप्यते। एवङ्कारं पुरुषकारं कारंकारं विषयान्तरेष्वपि नदीष्णता जाजायते।

वर्त्तमानपरीक्षाभिर्लेखेऽपि लाभाऽतिरेको निभाल्यते । प्राचीनपण्डि-ताः प्रायो मौखिकविद्वांसो भवन्ति स्म । अद्यत्वेऽपि तादृशा गवेषणया न दूरापाः, ये व्याकृतौ प्रथितयोग्यताका अपि, परकीय-लेखस्खलनप्रदर्शनेऽपि कुशलाः, तेषां स्वयमेव लेखलेखने न प्रवृत्तिः। लेखलेखनात् ते वृद्धाः शीतादिव बिभ्यति । कस्याचित् प्रस्तावस्य निबन्धस्य वा निर्मितिस्तु तेषां कृते महाभयावहा । तेषां लेखेषु अशुद्धिभूयिष्ठता–विशृङ्खलताप्रभृतयो दोषास्तु सुलभा एव । अत एव ते समाचारपत्राणि न दिदृक्षन्ते, न वा शुश्रूषन्ते । अथ च तानि केवलं निन्दन्त एव तिष्ठन्ति । सत्यम्–अशक्तास्तत्पदं गन्तुं ततो निन्दां प्रकुर्वते, ।

परं परीक्षोत्तीर्णास्तु प्रायो लेखप्रस्तावादिसम्बन्धे प्रथितय-शस्काः, प्रतिभाप्रतिभाताः, सामयिकज्ञानशालिनश्च सन्ति । अत्रैव किमु-अन्येषूच्चावचेषु व्याख्यानादिकर्मसु, उत्सवादिनवीनप्रबन्ध-नकृतिषु, समितिप्रभृतिकार्य्यसञ्चालने, समाचारपत्रसम्पादनादि-व्यापारे परं पटिमानं कलयन्ति । अथ च परीक्षोत्तीर्णा धनाऽर्ज्ज-नादिकर्म्मसु, कूपमण्डूकताऽपसारणायां, विदेशादिभ्रमणे, अपरि-चितेन सहाऽऽलापशैल्यभिज्ञतायां, सभ्यतायां, शिशिरकर-करनि-कराऽवदातस्वयशोराशिविस्तारणे च अनाघ्रातपरीक्षाणामपेक्षया नायकायमाना भवन्ति ।

परीक्षोत्तीर्णतयो च प्रायोऽध्यपकता वेतनप्राप्तिरपि च जायते; येन धनसङ्ग्रहं विधायाऽऽवश्यक..बहुलेऽस्मिन् युगे पुरुषः स्वकीयाऽऽवश्यकताः प्रपूरयितुमीशानो भवति । योग्यतया चा-ऽन्तिमपरीक्षोत्तीर्णो वैदुष्यस्य पात्रं भूत्वा सर्व्वविषयसंवलिते साहित्ये विचरितुं क्षमता–शाली जञ्जन्यते । परीक्षादेव्या उपगू-ढाश्च जनाश्शीघ्रलेखलेखने नियतकालं लेखसमापने च पेशला

भवन्ति । तदीयो लेखप्रकारो विशिष्टशैलीको हृदयस्पृक् च भवति । अतथाभूतानां तु न तथात्वं भवति । तदीय लेखमान्द्यादिकं प्रथितमेव सर्व्वत्र ।

परीक्षायां कांश्चिद् दोषान् दृष्ट्वा तस्याः सर्व्वथा परित्यागो न स्थाने । यतो हि दोषेण वियुक्तं किं वस्तु भवेद् ? । अत एवोक्तं भगवद्गीतासु-'सर्व्वारम्भा हि दोषेण धूमेनाऽग्निरिवाऽऽवृताः १८ । ४८ । एवमेव महाभाष्ये १ । १ । ३८ धुड्सन्निपातपरिभाषाया दोषान् प्रयोजनानि चाऽऽख्याय तत्रोक्तम्—"एते दोषाः समा भूयांसो वा, तस्मान्नाऽर्थोऽनया परिभाषया ( इति वादिन उक्तिः ) । ( तत्रोत्तरम्–) 'नहि दोषाः सन्तीति परिभाषा न कर्त्तव्या लक्षणं वा न प्रणेयम् । नहि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते । न च मृगाः सन्तीति यवा नोप्यन्ते । तस्माद् यान्येतस्याः परिभाषायाः प्रयोजनानि, तदर्थमेषा परिभाषा कर्त्तव्या, प्रतिविधेयं दोषेषु" । कीदृशी प्रसन्नमधुरा वाग् भगवता पतञ्जलिनोदीरिता । तथैव परीक्षायां दोषान् दृष्ट्वा तदीयस्त्यागो न कार्य्यः, प्रत्युत तद्-गुणानुपयुज्य तदीयदोषनिराकरणे प्रयास एव बुद्धिमत्ता । एतस्याः परीक्षाया द्वारेण यथा संस्कृतभाषा प्रसरेत्, तस्या राष्ट्रभाषात्वञ्च प्रभवेत्, तथा न साधनान्तरम् । केवलमत्र विद्वद्भिः सम्भूयैका ईदृशी विशिष्टशिक्षापद्धतिर्निर्मेया, यया तद्-दोषा अपि दूरे स्युः, साधारणजनानामप्यत्र रुचिर्व्वृद्धयेत, अध्यापकताऽतिरिक्तमपि कार्य्यक्षेत्रं प्रवर्द्धेत । येन संस्कृतस्य राष्ट्रभाषात्वं सम्भवेत् । अत्र विद्वत्सम्मेलनमेव प्रयोजनीयमित्युक्त्वाऽत्र विषये विरम्यते ।

## ४ संस्कृतभाषयैव परलोकसिद्धिः ।

संस्कृतादितरा भाषाः परलोकविषये मूकाः, अत एव प्रायः

संस्कृतेतरभाषोपजीविका — परलोकं न मन्यन्ते । एलो विषयविश- कलनकर्त्तारोऽस्मत्पूर्वजा एव । एतत्प्रकटीकरणश्रेयोऽस्माकं हिन्दूनां शिरसि । परमस्मास्वपि केचन परलोकमपलपन्ति । ये परलोक- मपलपन्ति, ते वस्तुतो नास्तिकाः । द्रष्टव्यम्-'अस्ति नास्ति दिष्टं मतिः, ४ । ४ । ६० इति पाणिनीयसूत्रस्य महाभाष्ये-'अस्तीत्यस्य मतिरास्तिकः, नास्तीत्यस्य मतिर्नास्तिकः' अस्य प्रदीपे कैयटः- अस्तीत्यस्येति परलोककर्तृका च सत्ता विज्ञेया । तत्रैव विषये- लोके प्रयोगदर्शनात् । तेन परो लोकोऽस्तीति मतिर्यस्य स आस्ति- कस्तद्विपरीतो नास्तिकः, ।

'आप्नोतीमं लोकमाप्नोत्यमुम्' अथर्ववेदे ६ । ११ । १३ अत्र 'इमं लोकम्' इत्यनेनाऽयं लोको द्योत्यते, 'अमुम्' इत्यनेन चाऽऽमुत्रिकलोकः ( परलोकः ) साध्यते । 'इमञ्च लोकं परमञ्च लोकम्' अथर्व० १२ । ५४ । ५ परममित्यस्य परम् इत्यर्थः, यथा 'यः परस्य प्राणं परमस्य तेज आददे' अ० १३ । ३ । ५ इति पर- लोकस्य सिद्धिः । तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने, इदञ्च परलोकस्थानञ्च' शतपथ० १४ । ७ । १ । ८ कीदृशी स्पष्टता, अस्माल्लोकात् परलोकस्य भेदः प्रदर्शितः 'अयं लोको, नास्ति पर इतिमानी पुनः पुनर्वशमापद्यते मे' १ । २ । ६ इति कठोपनिषदि यमवचनेन परलोकस्याऽस्माल्लोकाद् भिन्नतायां स्पष्टता जाता । 'परलोकसहायार्थं' मनु० ४ । २३८ 'नाऽमुत्र हि सहायार्थं पिता माता च तिष्ठतः । न पुत्र दारं न ज्ञातिर्धर्मस्तिष्ठति केवलः' मनु ४ । २३९ 'परलोकं नयत्याशु' मनु० ४ । २४३ इति मनुवचनेषु परलोकसिद्धिः । अनृणा अस्मिन्, अनृणाः परस्मिन्, तृतीये लोके अनृणाः स्याम' अथर्व० ६ । ११७ । ३ इति वेदमन्त्रात् पर- लोकस्याऽस्माल्लोकाद् भिन्नता । 'तस्माल्लोकात् पुनरेति अस्मै लोकाय कर्मणे' शतपथ० १४ । ७ । २ । ८ ।

'परलोक से...... विमुख कभी न होना' इति संस्कारविधौ २१३ पृष्ठे स्वा० दयानन्दः। 'अस्मिँश्च लोकेऽमुष्मिँश्च' ऐतरेयब्राह्मणे ३। २३। तत्राऽवसं वर्षसहस्रमाग्रं ततो लोकं परमस्म्यभ्युपेतः' महाभारते आदिपर्व्वणि ८८। १६। श्रीयास्केन निरुक्ते ६। ३२। १ ममदकस्य ) नास्तिकस्य ) 'योऽयमेवाऽस्ति लोको न पर इति प्रेप्सुः' इति व्युत्पत्तिः कृता। शतपथे १४। ७। १। ३६ देवलोकः, १४। ७। १। ३७ गन्धर्वलोकः, १४। ७। १। ३८ प्रजापतिलोकः १४। ७। १। १९ ब्रह्मलोकः, ३। ७। १। २५ पितृलोकमनुष्यलोकाः प्रदर्शिताः। 'ब्रह्मवर्चसं मह्यं दत्वा व्रजतु ब्रह्मलोकम्' १६। ७१। १ इत्याथर्व्ववेदमन्त्रे ब्रह्मलोकसिद्धिः। 'ब्रह्मलोके महीयते' ४। २६० इति मनुः। 'विष्णोर्यत् परमं पदम्' सामवेदे उत्तरार्चिके १८। २। १। ५ इति विष्णुलोकः। ऊर्ध्वो नाकस्याऽधिरोह विष्टपं स्वर्गो लोक इति यं वदन्ति' अथर्व० ११। १। ७ इति स्वर्गलोकसिद्धिः, स्वर्गलोकप्रदर्शकास्तु बहवो मन्त्रा उपस्थापयितुं शक्याः। परो वै अस्माल्लोकात् स्वर्गो लोकः' ऐतरेयब्राह्मणे ६। २० हन्त! कियती स्पष्टता, ये इमं लोकमेव स्वर्गं ब्रुवते–ते नास्तिकाः पश्यन्त्वेतत्। 'अयं च लोकः परश्च लोकः' शत० १४। ७ ३। ११।

'जीवानामायुः प्रतिर त्वमग्ने! पितॄणां लोकमपि गच्छन्तु ये मृताः' अथर्व० १२। २। ४५ 'मृताः पितृषु सम्भवन्तु' अथर्ववेदे १८। ४। ४८ इति मृतानां पितृलोके प्राप्तिरपि सूचिता।

'अथाहुर्नारकं लोकम्' १२। ४। ३६ इत्यथर्व्ववेदमन्त्रेण नरकलोकसिद्धिः। 'नारकम्' इत्यस्य पदपाठो 'नरकं लोकम्' इति। अत एव ६। ४। ७४ सूत्रे महाभाष्ये—'छन्दसि दीर्घो बहुलं दृश्यते, तद् यथा-पूरुषो नारक इति। 'अन्येषामपि दृश्यते' ६। ३। १३७ सूत्रे काशिकायाम्-'यस्य दीर्घत्वं न विहितम्, दृश्यते च प्रयोगे, तदनेन कर्त्तव्यम्—नारकः पूरुष इति'। 'हविर्भिरेके स्वरितः (स्वा-

इत इतिच्छेदः ) सचन्ते...... नेजिह्मायन्त्यो नरकं पताम्' इति निरुक्ते १।३।६ इति लुप्तशाखीयमन्त्रे यज्ञादिभिः स्वर्गप्राप्तिः कुटिलाचारेण नरकप्राप्तिर्दर्शिता। 'नरकन्तु विपर्यये' ४। २३५ 'अवाङ् नरकमभ्येति प्रेत्य स्वर्गाच्च हीयते' ८। ७५ इति मनुस्मृतौ। ३।२६ योगदर्शनसूत्रभाष्ये-महाकालाऽम्बरीष-रौरव-महारौरव-कालसूत्राऽन्धतामिस्रादीनां नरकाणां वर्णनम्। मनुस्मृतौ १२। ७५-७६,४। ८७ ८८-८९-९० नरकभेदानां वर्णनम्। 'सर्वान् कामान् यमराज्ये' अथर्व० १२।४।३६ इति यमलोकसिद्धिः ।

इत्थं परलोकज्ञानं संस्कृतसाहित्ये वर्त्तते। अस्माभिरत्यन्त-सङ्क्षेपेणाऽत्र प्रमाणानि दर्शितानि। आधिक्येन दिदृक्षवो मम 'वेदपुराणयोरेकवाक्यता' इति ग्रन्थं पश्यन्तु। परलोकसिद्धिश्च-रकसंहितायां सूत्रस्थाने ११।६ तः प्रारभ्य ११।३३ पर्य्यन्तं सुन्दरेण प्रकारेण आप्तोपदेशप्रत्यक्षाऽनुमानयुक्तिभिश्चतुर्भिः प्रमाणैः प्रदर्शिता। तेन ये परलोकविद्याऽभिलाषिणः, तेषां कृते संस्कृताऽध्ययनमनिवार्यम्। हन्त! यस्मिन् संस्कृतसाहित्ये सर्व्वं श्चिद् वर्त्तते, सा राष्ट्रभाषा कुतो न भवितुमर्हति?। राष्ट्रभाषायां राष्ट्रस्य हिताधायकानां सर्व्वेषां विषयाणां दृष्टानामदृष्टानां वा निवेश आवश्यकः। स च सर्व्वाङ्गीणो संस्कृतसाहित्ये स्वस्वविषये प्राप्यते। संस्कृतसाहित्यस्य प्रत्येकविषयग्रन्थे स स विषयः सर्व्वाङ्गीणमवलोडितः—इति तत्परिचितानां न परोक्षम्।

## ५ प्राचीनसंस्कृतप्रणाल्यां परिवर्त्तनमिष्यते न वा।

केचित् क्रान्तिकारिणः सर्व्वविधायै प्राचीनतायै द्रुह्यन्तो विकृति मेव जीवनं मन्यन्ते। परं तन्मन्दम्—प्रकृतिरेव जीवनं भवति, न विकृतिः। या विकृतिः प्रकृतिद्वारैव बोभूयमाना दृश्यते, सा वस्तुतो विकृतिरेव न। या च विधा प्रकृत्या निर्म्मिता

यदि वयं तां स्वेच्छानुसारं विपर्य्यस्तां कुर्म्मः, सा विकृतिर्भवति। सा च जीवने संशयोत्पादयित्री भवति विकार-कारिणी वा। अस्मदीयसंस्कृतसाहित्यं तदीयं व्याकरणञ्च यथा प्राक्तनैर्न्यस्यत, तद्विरुद्धतामवलम्बितायां नवीनतायां वा जनितायां संस्कृतसाहित्यस्य सा सार्व्वकालिकता, सा सार्व्वदेशिकता च विहन्येत। कश्चित् स्वं महापुरुषं मन्यमानस्तत्र स्वसुविधानुसारि परिवर्त्तनं चिकीर्षेत्, तद् अन्यदीयाऽसौविध्याय स्यात्। अन्योऽपि च पुनः स्वातन्त्र्यकारणाद् वदेद् यद्—नहि नहि। ईदृशे सुधारेऽप्यस्माभिर्विषमता दृश्यते, परं संस्कृतप्रणाल्यां मदुक्तप्रकारेण परिवर्त्तनं विधेयम्। यदि प्राक्तन〰 कश्चित् स्वगृहे तत्त्वदर्शी अथवाऽऽचार्य्यः, तर्ह्यहं स्वप्रान्तस्य नेताऽस्मीति। तर्हि वाच्यम्। कस्य किं मन्येत-कश्चोपेक्षयेत कश्चाऽपेक्षयेत—कश्चाऽवहेलयेत? पाठकानां विदितं भवेद् यद्—हिन्दीभाषायाः संस्कृततोऽपभ्रष्टत्वात् तस्या मर्य्यादा स्वरूपं वाऽद्याऽपि न निर्णीतम्। तेनाऽद्यत्वे या हिन्दीभाषा वर्त्तते· या च 'चन्दावरदाई' प्रणीत 'पृथ्वीराजरासो' ग्रन्थसमये हिन्द्यासीत्, तयोराकाशपातालसदृशो भेदो दृश्यते। चन्दवरदाईसामयिकीं हिन्दीं बोद्धुमद्यतना हिन्दीकोविदा अनीशाना भवन्ति, तादात्विकाश्चाऽद्यतनहिन्दीं ज्ञातुं न प्रबभूवुः।

यद्यद्यत्वे संस्कृतप्राचीनक्रमेऽपि स्वसुविधाऽनुसारिसुधारप्रियाः सुधारकाः स्वेष्टं सुधारं वाञ्छन्ति, तत्राऽपीयं व्यवस्थाऽवश्यं दृश्येत। अस्माकं संस्कृतभाषाया येयं विशेषता ऽऽसीद् यद्—लौकिकसंस्कृतसाहित्यमद्यतो लक्षकोटिवर्षात् प्राग् यादृक्मासीत्—अद्यापि तादृक्तमेवाऽस्ति।—सेयं विशेषता धर्म्मे इव साहित्ये ऽपि सुधारकाणां प्रवेशे सत्यवश्यं नश्येत्। सनातने धर्म्मे कथं क्षति〰 प्राप्ता—इत्यत्र महिष्ठं कारणं सुधारकाणां कृपा।

सनातनधर्म्मे यद् यत् काठिन्यं केनचित्सुधारकाभासेनाऽनुभूतम्; तेन स्वनाम प्रख्यात्यै (यत ✕ क्रान्तिकारिणां नाम शीघ्रमेव विश्रूयते) स्वसुविधानुसारिसौविध्यस्य मार्गं जनता प्रदर्शिता। जनता सदा सर्व्वकर्म्मसु स्वराज्यमिच्छति-इति सार्व्वजनीनम्। सा संयमं नेच्छति, सा उद्योगं न वष्टि, सा पुण्यं न वाञ्छति। सकृदपि तया स्वेष्टसौविध्यप्रदाता दृश्येत, सा तं नेतारं मन्यते, तञ्च स्वशिरसि आरोपयति। तदा च स सुधारक ✕ क्रान्तिकारी महाप्रसन्नः सन् स्वयम्भुवम्मन्यो भवति। परं सैव जनता पुनस्तत्सुधारककृतसौविध्येऽपि स्वाऽसौविध्यं दृष्ट्वा पुनस्तानपि नियमान् परिविवर्तयिषति। अस्यैकमुदाहरणं गृह्यताम्-सनातनधर्म्मे कतिपयकठिननियमान् दृष्ट्वा सुधारप्रियस्य स्वामिदयानन्दस्य जन्माऽजनि। तेन प्राचीना भूयस्यो मर्य्यादाः खण्डिताः, येनाऽसंयता जनता भूयस्तरामतुष्यत्। तञ्च स्वनेतारं मेने। परमधुना तदीयैव जनता तत्प्रणीतसौविध्येष्वपि स्वाऽसौविध्यमाकलय्य तत्राऽपि परिवर्त्तनं कामयते। स्वा० दयानन्देन प्राचीनजन्मसिद्धवर्णव्यवस्थामनादृत्य अर्व्वाचीना केवलगुणकर्म्मकृतवर्णव्यवस्था प्रचालिता। परमधुना तत्समाज एनामपि न स्वीकरोति। यदि स्वीकुर्य्यात् तर्ह्ययं समाजस्य विध्वंसो भवेत्। कश्चित्तत्र नेत्रपालशर्मा यदि महद् व्यापारकर्म्म प्रारभते, ब्राह्मणस्यैकमपि कर्म्म न करोति, सोऽपि तत्र तथैव 'शर्मा' भवति। बहवो 'ग्रेज्युएटाः' वेदस्यैकाक्षरमपि अजानानास्तद्भिन्न विद्यापरिश्रमकरणात् तन्मतेन शूद्रा अपि न शूद्रा भण्यन्ते। यद्यार्य्यसमाज एतेभ्यः शूद्रपदवीमुपहरेत्, तर्हि ते आर्य्यसमाजमेव त्यजेयुः। अत एवाऽधुनाऽऽर्य्यसमाजेनाऽयमन्यो नियम आकलितो यद्-आर्यसमाजस्य पत्रिकायां (रजिष्टर में) यस्य नाम 'चन्दा' दातृषु भवेत्, स मूर्खब्राह्मणोऽपि ब्राह्मणः शूद्रोऽपि ब्राह्मणः क्षत्रियो वा। वेदस्यैकाक्षरमजान-

कुशलो व्याख्यानदानमात्रकुशलो वा ब्राह्मण इति नियम आकलितः। यद्यपि काऽपीदं वैशद्येनोल्लिखितं, तथाप्यस्मदुक्तरीत्यैवाऽऽर्य्यसमाजेनाऽऽचर्य्यते-इत्यनुभवन्तु। इत्थं नियोगाऽस्पृश्यतादिस्वा० दयानन्दसम्मतसुधारेष्वपि अद्यतनसुधारकाणामसौविध्यं स्वयमुन्नेतुं शक्यम्। एवं प्रकृते गृह्यताम्—यदि संस्कृतप्रणाल्यामपि अलसानां पुस्तकाध्ययनमात्रकर्तॄणां वा सौविध्याय परिवर्त्तनं चिकीर्षन्तु सुधारकाः, तर्हि ततोऽपठिता जना अन्याः सुविधा एषिष्यन्ति ते कथयिष्यन्ति- अजी! हिन्दीभाषाया एव नाम संस्कृतभाषेति स्थाप्यम्, अन्ते च तत्र सर्व्वत्राऽनुस्वारः कर्त्तव्यः। इत्थं व्यापिका भविष्यति गीर्व्वाणगवीति, बत! अत एवाऽहं संस्कृतविदुषः साञ्जलिबन्धं प्रार्थये यत्–संस्कृतभाषायां सुधारकाभासानां पादप्रवेशं माऽस्म नाम कारयन्। अन्यथा तेषामविहतप्रचारे सति ये रामायणमहाभारतादय सहस्रलक्षावधिबद्धा अस्माकं ज्ञानगम्या भवन्ति, त एव सुधारकाभासानां कृपया पुनर्महाकाठिन्यमुपसीदेयुः। तदा संस्कृतभाषाया दशा 'महाजनी' भाषावत् स्याद्। भिन्नभिन्नानां पुरुषाणां भिन्नभिन्नैव संस्कृतभाषा स्यात्। कश्चित् कथयेत्-संस्कृतभाषातो णकारञकारङकारा अर्द्धचन्द्रयितव्याः। अपरो वदेत्– षकारह्नकारक्षकाराः संयुक्ता वा वर्णाः संस्कृतभाषातो निस्सारणीयाः। केचिद् ब्रूयुः-'कात्स्न्र्ये'सदृक्षाश्शब्दा दशगण-प्रक्रियाश्च बहिष्कर्त्तव्याः, क्तक्तवत्वादिभिरेव कार्य्यं चालनीयम्। एवं तर्हि कस्य कस्य किं किं मन्येत ? । एकस्य प्रौढस्य प्रौढायुवती द्वे स्त्रियावास्ताम्, स्वाभीष्टसुधारपक्षपातिनीभ्यां ताभ्यां वैचित्र्यं कृतं पत्युर्वराकस्य, युवत्या पत्युः श्वेतकेशा उत्पाटिताः, प्रौढया चाऽवशिष्टाः कृष्णकेशा उत्पाटिताः, तादृशी दशा विविधसुधारकाम्यद्भिर्गीर्व्वाणवाण्याः क्रियेत।

तेनाऽहमीदृक्षसुधारकान् दूरत एव नमस्कुर्व्वन् सप्रश्रयं

प्रार्थये, यद्-भवन्तो यदि क्रान्तिकरणाद् ऋते जीवितुं न प्रभवन्ति, तर्हि कश्चिदन्यो मार्गोऽन्विष्यताम् । पुरुषादयः सर्व्वे पादाधारेण चलन्ति । भवन्तस्तत्रैव क्रान्तौ प्रवर्त्तन्ताम्, यद् यथा ते शिरोद्धारेण चलनं प्रारभन्ताम् । वस्तुतो विविधसुधारेषु कृतेषु अद्यतन-संस्कृते भविष्यत्संस्कृते चाऽऽकाशपातालवदन्तरं स्यात् । तदाऽस्याः संस्कृतभाषायाः सार्व्वदेशिकता सार्व्वकालिकता च कर्पूरायेत । अस्याः सार्व्वदेशिकता-सार्व्वकालिकतयोर्विनाशे तु सा संस्कृत-भाषा राष्ट्रभाषात्वस्याऽधिकारमपि नाऽर्हेत् । तादृशसंस्कृतसुधाराऽपेक्षया इयं वर्त्तमाना हिन्दीभाषैव राष्ट्रभाषा स्वीकार्य्या, यस्यां पर्य्याप्तप्रयत्नो जातः, यतः संस्कृते सुधारस्य प्रयासो व्यर्थो भवेद्, गिरिखनने मृतमूषिकाप्राप्तिसदृशं फलं स्यात् । तस्मादेवं-विधात् साहसाद् विरमन्तु महाभागा इति साऽनुनयं पौनःपुन्येन प्रार्थ्यते । तत्र यत पुनः पुनः सारल्यस्य प्रश्नोऽवस्थाप्यते, तत्रै-तदेवोत्तरं यद्-अस्मत्संस्कृतसाहित्येऽपि विभागत्रयं दृश्यते । उत्तमो विभागो मध्यमः-साधारणश्च । तत्र यदि केचिदलसा अधि-कज्ञानं न चिकीर्षन्ति, ते साधारणमेव विभागमध्याप्याः । ये तु साधारणमेव विभागमधिगम्य सदापि उत्तमविभागमारुरुक्षन्ति, ते शिष्या दम्याश्च ।

एकः प्रश्नोऽन्योऽवशिष्यते, यद्-यदि संस्कृतभाषा राष्ट्र-भाषा काम्यते, तर्हि सा राष्ट्रस्थसकलपुरुषस्त्रीमात्राय मनपह्नोतव्या स्यादिति । परमेतदपि यत्किञ्चित् । स्त्रीशूद्रादीनां वलं वेदे एव स्त्रीशूद्रान् अनधिकृतान् मन्यते सनातनधर्म्मः, तत्रोऽपि वैधवेदा-ऽध्ययने । अनेन संस्कृतभाषाया राष्ट्रभाषात्वे का क्षतिरिति वयं बोद्धुं न पारयामः । यतः शूद्रादीनामन्यानि बहुविधानि शिल्पा-दिकस्य कर्म्माणि यदि नियतानि, ते तानि त्यक्त्वा यद्येतत्संस्कृत-साहित्याऽध्ययनमभिनिविशेरन्, तर्हि किं तेषां कार्य्यमन्ये

सम्भालयेयुः ?। स्वकर्म्मत्यागे सति तेषामन्यदीयसेवाकार्य्येऽवश्यं त्रुटिर्भवेत्। स्वस्वकर्म्मत्यागेन महान्तो दोषा उत्पद्येरन्। पठन-मात्रपरा स्त्री यदा भोजनादिसेवार्थं प्रोच्येत, तदा सा पतिमाचक्षीत यत्–किञ्चित् प्रतीक्ष्यताम्–अहमिदं पुस्तकं समापयानीति, निबन्धं वा सम्पूरयाणीति। किञ्चित्प्रतिपाल्यताम्, एवमुक्त्वा पुनः पतिं ब्रवीतु यन्ममाऽयं रोदनपरो बालको भवतैव सान्त्व्यताम् चुल्ल्यामग्निश्च ज्वाल्यताम्, चूर्णपिण्डोऽपि निर्म्मेयः, तावदहमिममुपन्यासं पूर्णीकरवाणीत्यादि'। अत एव ते स्त्रीशूद्रादयो यदि नाऽध्याप्येरन्नेतदादिकहानिमभिलक्ष्य संस्कृतभाषां वेदप्रकारेण, तर्ह्यनेन न काऽपि हानिः। राष्ट्रभाषाभावेऽपि तदध्ययनं नाऽनिवार्य्यं भवति। अङ्गरेजी साहित्यमनधीतवन्तोऽपि पोतचालकादयस्तां वदन्त्येव। यदि तादृशाणामपि केषाञ्चित् प्रबलेच्छाऽपि भवेत् संस्कृतसाहित्याऽध्ययने, तर्हि यदि सनातनधर्म्मिपण्डितास्तदिच्छापूर्त्तिं न कुर्व्वन्तु, तर्हि ते सुधारकांस्तदध्यापनान्निवारयिष्यन्त्यपि न। केवलं ते तादृशाणां वेदविषयकाऽध्यापनेऽवश्यं विरोत्स्यन्ति, परं लौकिकसाहित्यशिक्षायां सनातनधर्म्मस्य न साक्षान्निषेधो न च विधिस्तादृक्षाणां कृते।

अथ च यदिदमाक्षिप्यते—यद्–राष्ट्रे नास्तिका अपि जनाः सन्ति, ये स्वर्गादिकं न मन्यन्ते। तत्रेदं निवेदनम् यद्–राष्ट्रभाषा राष्ट्रधर्म्मश्च–इत्येतद्भिन्नवस्तुद्वयम्। यद्यपि सत्यं त्विदं यद्—भाषामूलक एव धर्म्मो भवति, तर्हि संस्कृतसाहित्याऽधिजिगांसुभिः संस्कृतसाहित्ये विद्यमानं स्वर्गादिकमप्यवश्यमन्तव्यं भवेद्, अन्यथा तैः संस्कृतभाषैव आदरदृष्टया कुतो दृश्येत्? तथापि संस्कृतभाषाया राष्ट्रभाषात्वसिद्धान्तेऽस्माभिरिदं परस्परसम्बद्धं न स्थाप्येत। वयं तत्र प्रेमपूर्वकं युक्तिभिः प्रमाणैश्च तादृशानवबोधयिष्यामः। परं यो हि 'ममाऽश्वस्य

त्रय ऽ पादाः' इत्येतस्मिन् दुराग्रहे प्रवर्त्तमानः स्याद्, यश्च सीतात्यागकर्त्तारं श्रीराममवतारि पुरुषं न मन्येत, शबरीफलभोजिनश्च रामं स्वेष्टदेवं मन्येत, शूद्रतापसहन्तारं रामश्च अवैदिकमाचक्षीत, तादृशन्तु ब्रह्माऽपि नरं न रञ्जयितुमीष्टे। परं राष्ट्रभाषात्वसिद्धान्तप्रचारार्थं वयमिमामपि स्वहानिं कथञ्चित् सहिष्यामहे। अस्माकमस्मिन् विषये ऽन्यदपि किञ्चिद् विवक्षितमविद्यत, परं विस्तरभयादितो विरम्यते। तत्र चैष सिद्धान्तो ऽस्माकं यत्—प्राचीनसंस्कृतप्रणाल्यां परिवर्त्तनं मा कारि। केवलं तत्र उत्तमा मध्यमा साधारणी—इति कक्षात्रितयं कर्त्तव्यम्। तत्र च तादृशकक्षका ग्रन्था एवोपादेयाः। न तत्र नवीनप्रत्ययानामावश्यकता, न च कतीनाञ्चिद् लिङ्ग—वचनकालादीनामर्द्धचन्द्रणावश्यकता। यथा नवीनप्रत्ययानां ज्ञाने प्रयतनीयं स्यात्, तथा प्राचीनप्रत्ययानामपि ज्ञाने। उभयत्र परिश्रमे साम्यम्। अत एवा ऽर्वाचीना ऽस्वाभाविकप्रयत्ना ऽपेक्षया प्राचीनैवाऽऽश्रयितव्या, यया संस्कृतभाषायाः सार्व्वदेशिकता-सार्व्वकालिकतारूपा विशेषता न व्यभिचरेत्।

## ६ लेखवक्तृतयोस्तारतम्यम्।

संस्कृतं यदि राष्ट्रभाषा काम्यते, तत्र लेखो वक्तृता चेत्युभयमेवेष्टव्यं स्यात्। अतऽ प्रसङ्गाल्लेखवक्तृतयोस्तारतम्यमत्र निरुच्यते—

या भाषा राष्ट्रभाषा चिकीर्ष्यते तत्र त्रयाणां साधनानां वशीकरणमवश्यकर्त्तव्यतयाऽऽपतति। तानि त्रीणि साधनानि 'प्रेस' पेन, प्लेटफार्म' नाम्ना विश्रुतानि। 'पेन' अर्थाद् लेखनी, तन्मूलकमेव 'प्रेस' मुद्रायन्त्रम्। 'प्लेटफार्म' इत्यनेन च तद्विषयकवक्तृता विवक्षिता। एषां त्रयाणामपि कारणाद् यत् किमप्यान्दोलनं सफली-

कर्त्तुं शक्यते। नव आन्दोलनपद्धतिषु वक्तृताया महत्त्वं स्थानम्। सर्व्वसाधारणानां हृत्सु स्वसिद्धान्तप्रसारणे, अन्येषां वा मतीः स्वाऽनुकूलाः कर्त्तुं, तदीयवैमत्यरोगनाशाय च वक्तृतैव रामबाणौषधिः। एवङ्करणेन आबालाद् आस्थविरं सर्व्व एव तेन सिद्धान्तेन परिचिता भवन्ति, यदि तस्य कस्यचिद्व्याख्यासौ वक्तृता प्रभावशालित्वं कलयति। अद्यत्वे सुधारकाणां यत्र तत्र वक्तृताबलादेव धर्म्मविरुद्धा अपि वार्त्ता धर्म्मधनैर्जनैरपि सम्मन्यन्ते। नाशे कारणमस्मदीयसनातनधर्म्मिणां तद्विषयकवक्तृता त्यागः। अद्यत्वे धर्म्मविप्लवसमयेऽपि यद् धर्मे अंशतः श्रद्धा वर्त्तते, तत्र कारणमास्माकं प्राचीनशैल्यां कथादिवाचनमेव, तदपि वक्तृताव्यपदेशभागेव।

वक्तृतायाः प्रभावशालित्वे च निदानं हार्दिकभाषाऽऽश्रयणमेव। मौखिकी भाषा हार्दिकभाषातो नाऽतिरिच्यते, न वा स्वतन्त्र्यं बिभर्त्ति। वस्तुतस्तु हृदयमेव वदति, न आननम्। तत्तु हार्दिकभाषा प्रकाशकं द्वारमात्रमेव। परन्तु वक्तारः कदाचन हार्दिकीं भाषां निह्नुत्य मौखिकीमेवाऽवलम्बन्ते। तदनेहसि हार्दिकभाषापिधित्सयां तन्मुखं तदीयहृदयं न सम्बध्नाति, तेनैव सा भाषा प्रयत्ननिष्पाद्यत्वाच्छ्रोतॄणां हृदयं न स्पृशति। एकं पुरुषं वयमन्तर्घृणास्पृशा दृशा पश्यामः, परं तस्मात्पुरुषात् तं स्वमानसिकाऽभिसन्धिं गोपयित्वा वयं बाह्ये तस्मिन्नैजीं निष्कपटश्रद्धां व्यञ्जयामः। सा खल्वास्माकीनभाषाऽस्माकहृत्-प्रेरिता न भवति, अत एव सा तस्मिन् स्वप्रभावं नाऽर्पयति, अस्मदीयमनोभावं स पुरुषस्तत्क्षणमेव विभावयति। एतदुदाहरणे ते वक्तृमहाशया अवसेयाः, यदीयव्याख्यानानि केवलं पुस्तकघोषणं भवन्ति तेषां प्रभावः कियान् पतति जनतायाम्? अद्यत्वे ईदृशवक्तॄणां न महार्घता। तेभ्यो रूप्यकाणि दत्त्वा भवन्तो यत् किमपि व्याख्यापयितुं शक्ताः। परं हार्दिकभाषामाश्रयतां वक्तॄणां प्रभावस्तु जनतायां सम्यक् पतति। अत्र

'गान्धि' महोदय एव उदाह्रियताम् । यत्- तदीयो जनतायां कियान् प्रभावः ? स किल कियन्तं प्रसिद्धेश्चरमाऽवधिमधिगतः । तस्य मार्गः साधीयान् स्यादसाधिष्ठो वा फलोन्मुखः स्यात् फले विसंवादी वा, परिणतौ शोभनः स्याद्व विषमो वेति त्वन्यत् । परं तस्य वक्तृता तद्धृदयप्रेरिता भवति, अत एवाऽसौ परहृदयस्पृक् सिध्यति । नाऽत्र विवादः स्यात् कस्याऽपि वादिनः ।

फलतः संस्कृतस्य राष्ट्रभाषात्वसिद्धान्तप्रचारार्थं वक्तारोऽपि तादृशाः स्थापयितव्याः स्युः, ये एतं सिद्धान्तं हृदि मन्यमानाः स्युः। केवलं रूप्यकलोभेन प्रसिद्धिलोभेन वा तथाऽऽचक्षाणा न स्युः । य आडम्बरमात्रेण इदंसिद्धान्तगृह्यो न, किन्तु वास्तविक एतत्सिद्धान्तप्रणयी, तस्य हृदयसम्पृक्तमुखाद् यत्र तत्रैव स एव सिद्धान्तो वहिः प्रस्फुरन् भविष्यति । आडम्बरमात्रफलकानां तु केवलं नियमितसमये एव तादृशसिद्धान्तप्रकाशकः शब्दा वहिर्भवेयुः, समयान्तरे तु ते दुःस्वप्नमिवेमं सिद्धान्तं स्मरेयुरपि न ।

फलतः स्वान्तसध्रीचीनवक्तृतावक्तारः परां ख्यातिं लभन्ते। यत्र २ ते साधयन्ति, तं २ देशं तु ध्रुवमेव श्रूयमाणस्वयशस्कं वितन्वते । तद्देशाद् दूरदूरतरमपि तेषां प्रभावः स्थायी भवति। एवं यावज्जीवं तेषां विश्रुतिस्तिष्ठति, मरणेऽपि कतिपयवर्षपर्य्यन्तं तेषां स्मृतिरक्षुण्णा तिष्ठति । वक्तारमेव प्रति जनाः प्रणतिप्रवणा भवन्ति । तम् आदर्शपुरुषं द्वितीयं देवं वा मन्यन्ते । तस्मादेव वीजात् स एव वक्ता सार्व्वजनिकेषु कार्य्येष्वाहूयते । वक्तार एव तत्तत्सभा-सभास्तारैः स्वकीयवार्षिकोत्सवेषु धनप्रार्थनार्थमाकार्य्यन्ते, येन तदीयपरिषत् स्थैर्य्यं विभृयात् । अत एव वक्तृणां गृहं-गृहं न भवति, किन्तु वाष्पयानस्य मध्यमश्रेणी एव तद्गृहायते । तेषामेव स्वागतार्थी जनास्तद्वाष्पयानाऽवस्थानस्थानानि प्राप्नुवन्ति, तदग्रे हस्तौ संयोज्य सेवार्थं प्रार्थयन्ते । तेषामेवाऽर्थे

उपायनरूपेण रूपकाणां भूयसी संख्या समुपस्थाप्यते, किं बहुना-अनुभूतचरोऽयं विषयो नाऽपेक्षते प्रबलमुपोद्धलनम्।

अधुना लेख आदीयताम्—लेखोऽपि पुरुषस्य महाहितसाधकः। पुरुषस्य किम्? प्रचिचारयिष्यमाणसिद्धान्तस्याऽपि। स यत्र कूपमण्डूकपुरुषं यश्च तत्र विश्रावयति, तत्रैवाऽप्रसिद्धं यं कमपि सिद्धान्तमपि जनताहृदि उत्कीर्णयति। यदि पुमान् लेखनकलापरिचितः, तदा तस्य महिष्ठः प्रभावो न केवलं तद्भाषाभाषिजनतायां प्रत्युत राजन्यपि प्रवर्त्तते। लेखो द्विधा भवति-सामयिकः स्थायी च। दैनिकसाप्ताहिकसमाचारपत्रेषु लेखानां प्रकाशनं प्रायः सामयिकत्वं भजते। पाक्षिकमासिकपत्रेषु च कस्यचित् सिद्धान्तस्य प्रचारायोल्लेखनं तद्विषयकपुस्तकादिप्रकाशनञ्च स्थिरसामग्रीशालित्वव्यपदेशभाग् भवति। उभय्यैव विधया लेखको जनानामादरास्पदं भवति। जनानां चेतसि तादृशलेखककृते श्रद्धोद्रेको ध्रुवमेव तिष्ठति। ते च तस्य दैनिककार्य्यप्रणालीमाकृतिं चित्रं वा दिदृक्षन्ते। किं भूयसाजनास्तस्य रसखनीं लेखनीमपि अवलुलोकयिषन्ति यत्-कीदृश्यस्य लेखखनी लेखनी, या महासौभाग्यभाग् अस्मद्धृदयस्पृग् भवति। तदीयाँल्लेखान् जनता न केवलं स्वयमेव पठति, प्रत्युत अन्यानपि प्रसह्य श्रावयति। क्वचित्तल्लेखकनाममात्रपठनमेव रोमाञ्चं तनोस्तनोति तेषाम्। यस्मिन् समाचारपत्रे तादृशप्रसिद्धलेखकस्य लेखास्तिष्ठेयुः, तत् समाचारपत्रमपि तेषां प्रणयास्पदं जायते। यस्मिन् मुद्रायन्त्रे तल्लेखकस्य पुस्तकानि मुद्रितानि स्युः, तन्मुद्रायन्त्रमपि तद्-दृशि महाऽऽदरास्पदञ्जायते।

एतदेव किम्-स एव लेखकपुङ्गवो यस्याऽप्रसिद्धस्याऽपि लेखकस्य साधारणोऽपि तत्सम्बन्धपुस्तके भूमिकायां द्वित्रशब्दानेवाऽङ्कयेत्, तत् साधारणपुस्तकमपि जनानां तोषकृज्जायते। कस्मिँश्चित्पत्रे स एव लेखको यदि कस्यचित्पुस्तकं समालोच-

मानस्तत् स्तुवीत, तज्जनास्तत्पुस्तकानयनव्यासज्जका अपि भवन्ति। तदीया स्वकीया कादाचित्की साधारण्यपि कृतिस्तैस्तोष्ट्रूयते। प्रसिद्धलेखकस्य विवादास्पदे विषये प्रत्ता सम्मतिरपि सम्मान्यते। यदि लेखकः कवित्वेनाऽपि सध्रीचीनः, तदा तु सुवर्णे सुगन्धयोग इव भवति। कविसम्मेलनेषु समस्यापूर्त्यर्थी स सर्वत्र निमन्त्र्यते। विवाहादिसम्बद्धपद्यनिर्मित्यर्थी विविधाऽभिनन्दनपत्रसज्जीकरणाय च जनास्तत्सम्मुखं दीनं मुखं कुर्वन्ति। समाचारपत्राणां सम्पादकास्तेषामेव लेखैः काव्यैर्वा स्वपत्रकलेवरं गौरवाऽऽस्पदं घटयन्ति।

वर्त्तमानसमयस्तु दूरमपास्यताम्—कालिदासादिमहाकवीनां जातानां शताब्दीनां वंहिमानो व्यतीतः। तेऽद्याऽपि न विस्मर्य्यन्ते लोके लोकेन, तेषां चरमा पाण्डित्यकाष्ठा काष्ठासु (दिक्षु) अद्याऽपि व्याप्ता, तेषां यशोभिर्दिशोऽपि व्याप्ताः। कवितारतिपञ्चबाणस्य बाणस्य कीर्त्तिमद्याऽपि जगन्ति गायन्ति। तत्र लेख एव श्रेयो बिभर्त्ति।

अधुनोभयविषयतारतम्यविमर्शाऽवसरे निम्नवार्त्ता अनुयभून्ते वक्तृतायास्तात्कालिकः क्षणिको वा प्रभावो भवति, लेखस्य प्रभावस्तु स्थायी भवति। वक्तारश्शताब्द्यन्ते विस्मर्य्यन्ते, लेखकानान्तु परस्सहस्रवर्षैरपि विस्मृतिपदवी दवीयस्यैव, अत्र कालिदासादीनां लेखा एव स्वतः प्रमाणम्। व्याख्यानाख्याने विस्तरोऽपेक्षणीयो भवति, लेखे तु सङ्क्षेपः। व्याख्यानाख्यानाऽनेहसि शृङ्खलाबद्धता कदाचिद् भिद्यते, विषयान्तरं वाऽऽपित्सति इति महदेव पारतन्त्र्यम्, लेखे तु न तथा, अत्र परं स्वातन्त्र्यम्। वक्तृतायां विद्यमाना व्याकरणाद्यशुद्धिरुपेक्षाविषयीक्रियते, लेखे तु न तथा। वक्तृत्वे सामयिकतैव एकान्तकान्ता जायते, यातयामता (असामयिकता) तु तत्र निरामन्त्रव्या। राष्ट्रीयविचारप्रसारे वक्ता

व्याकरणस्य फक्किकां विवृण्वन्नुपहासास्पदमेव भवेत् । प्रत्युत सैव प्रसिद्धवक्तुरपि वक्तृता या स्वसमये जनतायां प्रबलं प्रभावमानन्दं वा प्रावाहयत्, सैव तत्समयेऽपेते पुनः श्राव्यमाणा नीरसा तुच्छा च प्रतीयते । लेखे तु उभय्या विधाया प्रयोगः सुलभो न च वैरस्याधायकः । काममसामयिकपुस्तकं द्राङ् न विक्रीयेत, परं तदधिकारिणः प्रायो न दुरापा भवन्ति ।

वक्तृतया यत्किमप्यान्दोलनं प्रचिचारयिष्येत तच्छीघ्रं प्रचरति, लेखेन तावच्छैघ्र्येण प्रचारो न जायते । परं यावज्जायते, तत्र स्थेमा भवति । वक्तारमाबालाद् आस्थविरं जानन्ति, लेखकन्तु पठिता एव जनाः । वक्तृत्वे लज्जायै तिलाञ्जलिर्दातव्यो भवति, लेखकत्वे तु न तादृश्यावश्यकता । वक्तृतायाः प्रभाव आबालवृद्धं भवति स्वयमेव, परं लेखकस्य प्रभावः सीमितो भवति । लेखकस्य नामविश्रुतिः सम्पद्यते, वक्तुस्तु नाम्न आकारस्य चाऽपि । वक्ता नेता भवति, लेखके तु तत्ता तथा न जायते । वक्तृतायामिदं काठिन्यं यत् श्रोतृसमक्षमेव कार्य्यंनिर्व्वहणमावश्यकं तत्र, व्यवधानन्तु तत्र नितरां हानिकृत् । परं लेखकस्य तु लेखसमये समक्षं न भवति कस्याऽप्युपस्थितिः, अत एव स व्यवधायाऽपि लेखनीं प्रचालयति । वक्तुस्समयः परिमितो यौगपद्यपरीतः परेच्छानुसारी च भवति, लेखकस्य तु सोऽपरिमितः स्वेच्छानुसारी च भवति । वक्तृताकृते श्रोतृकुलाकुलं स्थानम्, स्थानशोभा, दर्शकानां समारोहः, श्रोतॄणां तूष्णीका--इत्यादीनां नान्तरीयकता भवति, तदैव प्रभावो जायते । लेखे तु नेदृशप्रयत्नस्याऽऽवश्यकता । वक्तरि सर्व्वं आडम्बराश्शब्दस्य, अर्थस्य, स्वरस्य, वेषस्य, वाग्मितायाः विविधहावभावानां, मनोहरोपक्रमस्य, प्रसङ्गविशेषे उत्तेजनायाः, अवसराऽनुरूपाऽनेकरूप-रूपकाणां च प्रयोजनीयता, परं लेखस्य कृते तु नेदृशप्रयासस्याऽऽवश्यकता, तत्र रससञ्चारायाऽलम्भूष्णुः

सामर्थ्येव तदुपयोगभाक् । वक्तुश्च प्रभावो नाऽपि जायते कोलाहलादिवशात् कदाचित् . तेन तस्य लज्जाऽसन्तोषश्चाऽपि भवति, लेखकस्य कृते तु न तत्सत्ता, परं तदीयपुस्तकानामविक्रये तस्याऽपि परमाऽसन्तोषो जायते । वक्ता सभानां जन्मदाता भवति । यत्र स तिष्ठति, तत्र प्रत्यूहव्यूहपातेऽपि, उपहासेऽपि च, स जनानाकर्षमाकर्षं स्वहार्दिकभावान् जनतापर्य्यन्तं प्रापयितुं प्रयतते । केवललेखकस्तु तद्विषयादत्यन्तमौदासीन्यं कलयति । सभास्वाहूतोऽपि ततो विरज्यते, अथवा तत्राऽगमनार्थं व्याजान् गवेषयति ।

उपसंहारः । यदि लेखकत्वं वक्तृत्वञ्चेत्युभयगुणभाक्त्वं स्यात् तदा तु सुवर्णे सुगन्धयोगः । अन्यथा यत्सन्निधावनयोरन्यतरः प्राकृतिकतां प्रपन्नः स्यात्, तमेव गुणमुपयुञ्जीत जनः । यतः स्वाभाविकावेवेमौ गुणौ तु भिन्नभिन्नावपि विच्छित्तिविशेषाधायकौ यशस्यौ प्रभावोत्पादकौ अभीष्टसिद्धान्तप्रचारसहायकौ च, कृत्रिमौ तु न तथा स्वारस्याऽऽधायकौ । स्वाभाविकवक्तुर्धिमनोमन्दिरचत्वरं व्याख्यानविषया नरीनृत्यमानाः पुरः स्फुरन्त इव तिष्ठन्ति, स एकमेव विषयं भिन्नभिन्नविधया एकमासपर्य्यन्तमपि श्रावयितुं शक्नोति, जनतायाश्चाऽऽश्चर्य्यस्य श्रद्धायाश्च कारणं भवति । प्रतिदिनं तं भिन्नभिन्नविषयाञ्छ्रावयन्तं विलोक्य जनतैव श्राम्यति, न सः । विस्मेरीभवति च जनता यत्–किमेतदभ्यन्तरे व्याख्यानानां खनिरजनि । एवमेव स्वाभाविकलेखकानामपि पुरस्ताल्लेखविषया हस्तौ संयोज्य तिष्ठन्ति । तदीयलेखविषयान् द्रौपदीवस्त्रराशीनिवाऽसमाप्नुवतोऽवेक्ष्य पत्रसम्पादका यन्त्रालयाऽध्यक्षाश्च एव श्राम्यन्ति । विश्रम्य विश्रम्य च तल्लेखकस्य लेखान् ग्रन्थाँश्च समयं व्यवधाय चिरात् प्रकाशयन्ति । कृत्रिमलेखवक्तॄणां तु कथा न प्रष्टव्या । ते वराकास्तु विचारयन्ति, अद्य कस्मिन् विषयेऽङ्क्येत, को वा विषयो व्याख्यायेत । तादृशां निबन्धॄणां लेखनी वक्तॄणां हृदयञ्च

कल्पेते । अतस्तदीयां कथां खलु खलूदित्वा । तेन स्वाभाविकस्यैव गुणस्य परिवृंहणाय विशिष्टं चेष्टनीयम् । तथापीतरस्मिन्नपि प्रयत्नो न हेयः, नह्येकेन हस्तेन तालिका सम्प्रपद्यते ।

फलतो यद्यस्माभिः संस्कृतभाषा राष्ट्रभाषा करणीया, यदान्दोलनं वा सफलयितव्यम्, तर्ह्यत्र नादृशो वक्तारोऽन्वेष्टव्याः स्युः, ये एतं सिद्धान्तं पठिताऽपठितजनतापर्य्यन्तं प्रापयन्तु । पठितजनतायां संस्कृतसम्मेलनानाम् अपठितजनतायां च हिन्दीसम्मेलनानां द्वारा च स्वसिद्धान्त प्रचारणीयः स्यात् । एवमेतत्सिद्धान्तप्रचाराय यत्र वक्तारः प्रेरणीयाः, तत्रैव सुलेखका अपि । संस्कृतपत्रेषु संस्कृतलेखकाः, हिन्दीपत्रेषु हिन्दीलेखकाः 'संस्कृतं राष्ट्रभाषात्वयोग्यम्' इति सिद्धान्तं प्रचारयितुं प्रेर्य्याः । प्रत्युत संस्कृतज्ञानां तु प्रथमं स्वकीयकर्त्तव्यमेतत् कर्त्तव्यम् । न तैस्तत्र श्रीकालीप्रसादशास्त्रिप्रेरणा-प्रतीक्षा कार्य्या, न च लेखलेखनार्थं दक्षिणायाः । स्वकर्त्तव्यमिति धिया तैस्तत्र पथि प्रचलनीयम् । एवं कृते एव एतत्सिद्धान्तप्रसारः सुशकः स्यात् ।

## ७ सम्मेलनस्य सम्मेलनानाञ्चाऽऽवश्यकता ।

समयोऽयमतीव विचित्रः समागतः । अस्मिन् कस्याऽपि कृत्यस्य निष्पत्त्यर्थं कस्या अपि संस्थाया द्रढिम्ने वा यावद् विविधा आडम्बरा न क्रियेरन्, तद्विषये कोलाहला न क्रियेरन्. सभेरीनादं जनता तद्विषये यावन्न विज्ञाप्येत, तावत्तस्य सिद्धान्तस्य तस्याः संस्थाया वा द्रढिमा नाऽऽशास्यते । अद्य विदुषः कः पृच्छति ? को वाऽद्य गुणज्ञः ? । विशिष्टवेषधारी वावदूकश्च मूर्खोऽपि यथाऽऽद्रियते, मितभाषी आडम्बरशून्यश्च विद्वानपि तथा कथमाद्रियेत ? अद्य ज्यौतिषिकाणां ता जन्मपत्रिकाः—यासु विविधवर्णरञ्जिता रेखा न भवन्ति, अद्भुतरूपाः कुण्डल्यो न सन्ति अन्यत्

सार्वमवश्यकविषयजातं विद्यते—कऽ पृच्छति ? प्रत्युत जनास्तत्र सन्दिहाना भवन्ति । यत्र सत्यार्थप्रकाशे १७ पृष्ठे स्वामि-दयानन्देन 'जो धनाढय हो तो, बहुत सी लाल पीली रेखाओं से चित्र विचित्र और निर्धन हो, तो साधारण रीति से जन्मपत्र बना के सुनाने को आता है' इति जन्मपत्रिकायाः 'लाल पीली रेखासु' उपहसितम्, स एव स्वा० दयानन्दः—'संस्कारविधौ' १६ पृष्ठे यज्ञशालाशोभानिर्माणार्थं नतमस्तको जातः । अत एव तेन लिखितम्- 'यज्ञशाला के चारों ओर ध्वजा पताका पल्लव आदि बान्धें; नित्य मार्जन तथा गोमय से लेपन करें और कुङ्कुम हलदी मैदा की रेखाओं से सुभूषित किया करें'—। अत्र यज्ञशालायाऽ कृते तेन कुङ्कुम हलदी मैदा' विहितरेखाणां स्वयमुपदेशऽ कृतः । एतेनेदं रहस्यं स्वयंप्रकटीभूतं यद्—यावत् कस्मिँश्चित्कर्म्मणि वाह्याडम्बरोपासना न क्रियते, तत्कर्म्म जगति न त्वरया विश्रूयते । एतदर्थमेव विविधकार्य्यकर्त्तारः स्वपण्यशालामस्तकेषु महान्तिमहान्ति स्वनामयशःसूचकानि विज्ञापनफलकानि दधति, समाचारपत्रेषु विज्ञापनानि प्रकाशयन्ति, भित्तिषु स्वनाम अङ्कयन्ति, विद्युति स्वनामवर्णान् प्रकाशयन्ति । किं वहुना—कथमस्माकं प्रसिद्धिः स्यादित्येतस्मिन् विषये ते सदाऽवदधाना भवन्ति । एवमेवाऽस्माभिरपि यदि स्वसंस्कृतभाषायोऽ प्रचार एष्टव्यः, तस्या राष्ट्रभाषात्वसिद्धान्त ऽ प्रचारणीयः, तर्हि तत्राऽपि विविधविचारा अपेक्षिताः स्युः

अस्माभिर्लेखवक्तृतयोस्तारतम्ये षष्ठविषये एतद्विषये विचारितम्, यद्—यत्र स्वाऽभीष्टसिद्धान्तप्रचारे अस्माभिर्लेख एष्टव्यः तत्र वक्तृताऽपि । लेखेन यत्कार्य्यमेकवर्षे भवति, तदेव वक्तृतया एकस्मिन् सप्ताहे निष्पद्यते । समाचारपत्रं कश्चित् पठेन्न वा पठेन्न जनस्तऽ वाध्यऽ कर्त्तुं शक्यते । परं यत्र पञ्चप जनानां सङ्घः स्यात्, तत्र 'हारमोनियम' स्य स्वरो मृदङ्गस्य च ध्वनिरपि श्रूयेत

कस्यचन मधुरवक्तुः सुधास्राविणी वाण्यपि प्रवहन्ती भवेत्, तत्र जनानां महान् सम्मर्दः स्वयमेव सम्भवति। स च सम्मर्दस्तदा तज्जिज्ञासुर्भवति यदत्र किं बोभूयमानमास्ते?। यथा तत्र बाह्याडम्बरोऽपि सर्वाङ्गीणः स्यात्, तथाऽऽभ्यन्तरिकमपि सारपूर्णं भवेत्, तर्हि जनानां तत्र स्वयं प्रवृत्तिरुदेति। अद्यत्वे सुधारकाभासैः कांग्रेसीयैर्वा यत्र जनता स्ववशीकृता, कण्टकाकीर्णं पन्थानं वा नीता, तत्र तैरस्माकमेव उपकारोऽपि कृतो यद्—जनताया दृष्टिकोणो देशहितोऽभिमुखं प्रवाहितः। अधुना जनता देशोद्धारं वाञ्छति, परं ते जनतायै देशोद्धारस्योपायान् विपरीतान् परिणतिभयावहान् वा प्रदर्शयन्ति। परं भवन्तो जनतां सम्यग् बोधयन्तु यद्- देशोद्धारस्योपायं सुधारकादयोऽपि भवतां समक्षं स्थापयन्ति, वयमपि च स्थापयामः। भवन्तः स्वयमेव योग्यं पन्थानं निर्द्धारयन्त्विति। सुधारका यत्र देशोद्धारं वाञ्छन्ति, तत्र तस्य वास्तविकमुपायं स्वदेशभाषाप्रचारं न वाञ्छन्ति। तेषां स्वराज्ये तथैव वैदेशिकभाषाया आङ्ग्ल्या महत्त्वम्। यया संस्कृतभाषाया भारतवर्षस्य मुखमुज्ज्वलं कृतं कदाचिद्, यस्यां भाषायां 'जर्मनी' देशो मोहितः, 'इङ्गलेण्ड' श्च यदन्वेषणपरः, यया चाऽस्मदीया सभ्यता देशश्चाऽद्याऽपि जीवति, तां भाषामनादृत्य, तां भाषामपमत्य वयं कथं कल्याणमाप्स्यामः? वास्तविको देशोद्धारः संस्कृतभाषाया राष्ट्रभाषात्वे वर्त्तते-इति प्रबलोपपत्तिभिर्यदि भवन्तो जनताहृदि स्थापयेयुः, तर्ह्यवश्यमस्यां दिशि भवतां भूयिष्ठाः सहायका जायेरन्। उद्यमिनामीश्वरः सहाय इति प्रथितेयमुक्तिः।

भवन्तो यावन्मौनिनो गृहे तिष्ठन्ति गेहेनर्दिनो वा, तर्हि कस्य काऽऽवश्यकताऽऽपतिता यद्-भवतां साहाय्यं कुर्य्यात्? आम्-भवन्तः स्वहार्द्दिकभावं जनतासमक्षं प्रबलयुक्तिप्रमाणैः स्थापयन्तु, पुनर्द्रष्टव्यं यद्-जनता भवद्वशंवदा भवति, नो वा? तस्योपायः

सम्मेलनस्य सम्मेलनानाञ्च सृष्टिरित्येव। सम्मेलनस्येत्यनेन प्रधानसम्मेलनमखिलभारतवर्षीयमभीष्टम्, सम्मेलनानाञ्चेत्यनेन प्रान्तीयानि जानपदानि ग्राम्याणि च सम्मेलनान्यभिप्रेतानि। संस्कृतज्ञानां विदितं भवेद्, यद्-अखिलभारतवर्षीयसंस्कृतसाहित्यसम्मेलनेन व्यतीतसमये पर्य्याप्तं कार्य्यं कृतम्। तस्य उत्साहिकार्य्यकर्तृभिः म० म० श्रीगिरिधरशर्म्मभिस्तद-यशः पताका पर्य्याप्तं प्रसारिता। परमधुना नववयः परिणामेन सह तेषां नवीनोत्साहोऽपि परिणतो जातः। अथवा 'रियासत' बन्धने पतनेन तेषां सा प्राचीनविचारधाराऽपि कारावद्धा जाता। तथापि प्राकनो जाता प्रकृतिरपि तान् कथं मुञ्चेत्?। ते यदा कदाचित् संस्कृतसाहित्यप्रोज्जीवनार्थं द्वित्रान् हार्दिकोद्गारान् प्रकटयन्त्यपि हरद्वारे पुनस्तैः सम्मेलनयोजना प्रारब्धा, परं तत्र तैः संस्कृतविदुषामौदासीन्यं पर्य्याप्तं निभालितम्। ततो विद्यावाचस्पति श्रीमधुसूदनझाऽभिनन्दनव्याजेन संस्कृतसम्मेलनस्य द्वैतीयीकमधिवेशनं स्वकीये जयपुरे एव निर्व्यूढम्। परं तेषां हार्दिकोऽयमभिलाषोऽविद्यत यत्-संस्कृतसाहित्यसम्मेलनस्य कार्य्यमप्यवश्यं जायताम्, परं विविधदेशीयपरीक्षोपरीक्षकतादिबन्धनपतितानामस्माकं गलादिदं प्रबलबन्धनमपि व्यपगच्छत्विति। परमात्मना मनोरथो निष्पादितः। श्रीविद्याधरशास्त्रि-एम० ए० महोदयो मन्त्रित्व धुरामुदविक्षिपत्। असौ प्राच्यपौरस्त्योभयविधसाहितीनिष्णात एतत्पदसमुचितश्च। सोऽपि तद्-बीजवापार्थमितस्ततस्त्या भूमीः परीक्षमाणस्तिष्ठति। परं कचित्तेन भूमी रिक्तैव दृश्यते, क्वचन च प्राप्ताऽप्यूपरवती दृश्यते। क्वचन साध्वी दृश्यमानाऽपि उत्साहजीवनरहिताऽनुभूयते। अत एव सोऽपि नितरां विस्मितो वेविद्यते यत्-किं क्रियतेति?। कथं गले समापतिता कार्य्यधुरा निरुह्येत?।

सहृदयाः! किं सुधारकाभासानामीदृग् दुराक्रमणं भवतु

जातं यद्-भवन्तः सर्व्वथा नपुंसकतामदीधरन्, आत्मनश्चैत-द्विषयेऽदत्तान् मन्यते, उत्साहं स्वकीयं सर्व्वथाऽलूलुपन्नेव। नैतत्समञ्जसम्। ये भवन्तः कदाचिज्जगद्गुरव आसन्, भारत-वर्षं नेतारो ऽविद्यन्त, अपरेषां शिक्षका उपदेशकाश्च आसिषत, अधुना त एव भवन्तः परमुखाऽपेक्षिणः सन्ति ?। अधुना भवन्तः स्व-कीयवाचि प्रभावं न मन्यते ?। अनुचितमेतद् इतोऽधिकं लज्जायाः किं स्थानम् ?। बद्धकरसम्पुटः प्रार्थये भवतो यद्-भवन्तः स्वकीये नगरे नगरे, ग्रामे ग्रामे, वीथ्यां वीथ्यां, प्रतिसप्ताह प्रति-पक्षं प्रतिमासं वा संस्कृतसम्मेलनान्यवश्यं सोत्साहं कारयन्तु। तानि च अखिलभारतवर्षीयसंस्कृतसाहित्यसम्मेलनस्य शाखारूपाणि कुर्व्वन्तु। ततश्च समये समये तदीयवार्षिकोत्सवेऽप्यवश्यं सम्मि-लन्तु। भवन्तस्तद् न म० म० प० गिरिधरशर्म्ममहाभागस्य सम्पत्तिं मन्यताम्, न चाऽपि श्रीविद्याधरशास्त्रिमहोदयस्य। न वा तत् परकीयं जानीरन्, प्रत्युतेदं स्वकर्त्तव्यमिति धिया, स्वकीयमातृ-भूताया गीर्व्वाणवाण्याः सेवेयम्, तस्या राष्ट्रपदासीनता एकं पुण्यकर्म्म-इति विविच्य वा भवन्तोऽस्यां दिशि अवश्यं प्रच-लन्तु। तदा भवन्मनोरथं स मङ्गलमयो भगवान् अवश्यं पूरयिष्य-ति। यद्यपि सम्मेलनानीमानि बाह्याडम्बररूपाणि, तथाप्यद्यत्वे बाह्याडम्बरं विना किमपि कृत्यं न भवितुमर्हतीत्यवसेयम्। अद्यत्वे 'कांग्रेस' सदृश्यो गजदन्तायिताः संस्थाः, 'आर्य्यसमाज' सदृश्यः प्राचीनतानाशिकाः संस्थाः कथं प्रसिद्धा लोकप्रिया वा जाताः, तत्र कारणं बाह्याडम्बरसेवनमेव। ईदृश्यः संस्थाः प्राक् साधार-णान्यपि स्वसंस्थासम्मेलनोत्सवादीनि कृत्वा पुनस्तदीयं वृत्तमति-मात्ररञ्जितं कृत्वा समाचारपत्रेषु तथा वर्णयन्ति, येन तद्विरुद्धा अपि जनास्तत्प्रभावभाविता स्तद्वशंवदा जायन्ते, पुनस्ते तत्संस्थायां यदि नापि पूर्णयोगदानकर्त्तारः स्युः, तथापि तत्र तेषां सहानुभूतिः शनैश्शनैर्वर्द्धते, अथ च तदभिप्रेतज्ञानविशारदास्तत्संस्थाऽधिका-

रिणस्तादृशानां कपटसम्मानं कृत्वा तान् स्वसभासु सम्यक् प्रवेशयन्ति, अयमाडम्बरस्य महिमा । आडम्बरस्य प्रियोऽद्यत्वे लोकः । तर्हि याः संस्था आडम्बरप्रियाः स्युः, ताः कथं न लोकप्रियाः स्युः ? । यद्यपि बाह्याडम्बरैरस्माकं मनो भृशं व्यथते, मर्माणि विध्यन्ते, तथापि 'लोकसंग्रहमेवाऽपि संपश्यन् कर्त्तुमर्हसि' इति लोकरुचिरपि नोपेक्षणीया भवति । आशासे ममाऽस्मिन् धाष्ट्र्यं श्रीमन्तो मर्षयन्तः सन्तो यया कयाऽपि विधया भारतमातुरिव स्वमातुः संस्कृतभाषायाः सेवावसरं नो हास्यन्ति । एतेनैव राष्ट्रभाषात्वसिद्धान्तः परिपक्वो भवेत् । किं बहुना ।—

## ८ संस्कृतविद्वद्वृत्तस्य प्रयोजनीयता ।

यद्यस्मिन्संसारे यशः प्रियता उत्साहो वा नाऽभविष्यत् तर्हि कश्चित् किमपि कार्य्यं कर्त्तुं बाध्यो नाऽभविष्यत् । अत एव यद्यस्माभिः संस्कृतभाषा राष्ट्रभाषा निर्म्माणीया, तर्हि तदर्थमुचितमेतद् यद्--तदर्थं यैः स्वकालव्ययः कृतः, तदर्थं धनिकभाषा तन्मूलकधनप्राप्तिश्चोपेक्षिता, रात्रिन्दिवं यदुन्नत्यै प्रयत्या स्वस्वास्थ्यस्याऽपि बलिदानं कृतम् , तर्हि तेषां यशः प्रसरणोपायो यदि कोऽपि न क्रियेत, येनाऽन्येषामपि तथाऽभिलाष उत्पद्येत, तर्हि मन्येऽयं कृतघ्नता स्यात् । समाचारपत्रेषु यदि तेषां जीवनचरितादिकं प्रकाश्येत, तर्हि तदल्पकालाय भवेत् । तेनाऽऽवश्यकताऽस्तीदृशस्थिरसम्पदयाः, ईदृशदृढमञ्जूषायाः, यत्र तेषां चरित्ररत्नं सुरक्षितं स्थायि च तिष्ठेत् । सोऽस्ति स्थायि-कोषो ग्रन्थो नाम । ग्रन्थः स्थायिवस्तु भवति । तत्र तादृशां विदुषां जीवनचरित्राणि संगृह्येरन् । तत्र यत्र तैर्विद्वद्भिः स्वपरिश्रमस्य पारिश्रमिकं प्राप्तं मन्येत, तत्राऽन्येषामपि शिक्षा स्यात् । तेऽपि तथैव स्वजीवनचरित्रं ग्रन्थेषु द्रष्टुं तथाऽऽचरणानि कुर्य्युः । अतः संस्कृतकार्य्यालयेन' यद् 'विद्वद्वृत्तं' प्रकाश्यते, तदपि संस्कृतस्य राष्ट्र-

भाषात्वाय अंशतः साधनम् । आशासेऽत्र संस्कृतजनता तत्संग्रह-णेन प्रकाशकस्योत्साहं वर्द्धयेत् ।

## ६ संस्कृतभाषयैव भारतोद्धारः ।

भारतमिति नाम प्रस्तरेष्टकानिर्म्मितानां गृहाणां नाम नास्ति । भारतोत्पन्ना प्रजैव भारतम् । तस्याः कथमुद्धारः स्यात् ? । तत्रोपायो धर्म्माऽऽचरणम् । धर्म्मः कथं शिक्षितः स्यात् ? तत्र धर्म्मशास्त्राणां प्रयोजनीयता । धर्म्मशास्त्रमर्म्म कथं ज्ञायेत ? यावत् संस्कृतभाषा शिक्षिता स्यात् । संस्कृतभाषाज्ञाने वेदस्य स्मृत्याश्च ज्ञानं जायते । ततश्चेतिहासज्ञानेन सदाचार ज्ञानं सदाचारेण लाभः कदाचारेण च हानिरिति सम्यगव-बुध्येत । संस्कृतभाषिकेष्वेव रामायणमहाभारतेषु उद्धारस्य सर्व्वा सामग्री निहिता, सभ्यतायास्तत्र चरमोऽवधिर्निरूपितः । पुराऽस्मदीयं भारतं सर्व्वयोन्नतिधामाऽऽनशे, अधुना चाऽव-नतं वर्त्तते, तत्र किं कारणम् ? एतद्विवेकेऽन्यधर्म्मिणोऽपि मुक्त-कण्ठं वदेयुर्यद्—अद्यत्वे सा भारती सभ्यता भारतीयेषु न दृश्यते, तेनैव भारतस्य पतनं संवृत्तम् । सा भारती सभ्यता ऽस्माकं प्राचीनैरस्मदनुजिघृक्षुभिर्मुनिवरैः प्रयत्नेन ग्रन्थेषु संस्कृतभाषायां सुगूढमुपदिष्टा । अतो यदि भारतवासिनो भारतस्य वास्तविकमुद्धारं वाञ्छन्ति, तर्हि तैराबालाद् आस्थ-विरमेषैव सुरगवी प्रचारणीया । तज्ज्ञानेन सा स्वाऽभ्यन्तरस्थां सभ्यतां—यया भारतं प्राक् समुन्नामं डुढौके—अस्मभ्यं समर्प-यिष्यति । सभ्यताप्राप्त्यैव वयमुद्धारं प्राप्स्यामः । वयमेव हि भारतवर्षम् । तर्ह्यस्माकमुद्धारे जाते भारतस्यैवोद्धारो व्यप-दिश्येत । तेन सिद्धं यत्—संस्कृतभाषयैव भारतोद्धारः ।

## १० संस्कृतसाहित्यस्य सर्वोत्कृष्टतावर्णनम् ।

अस्मदीयसंस्कृतसाहित्यमपरिमेयमनन्तञ्च । यदि दुष्टै- र्मौहम्मदैः स्वा ऽभ्युदयकाले संस्कृतभाषिकप्राचीनपुस्तकानि वह्नौ न समार्प्पयिष्यन्त, तर्हि न जानेऽस्माकं कियत् साहित्य- मभविष्यत् । परं गतस्य शोको मौर्ख्यं नाम । अद्यापि यावत् साहित्यं वर्त्तते, तदप्यस्माकं सर्व्वंजीवनं यावदुपयोगजनकम् । पुरुषस्या ऽऽयुः क्षीयते, न साहित्यम् । वर्त्तमानं प्राचीन- साहित्यमस्माकं सुबहुयोग्यताजनकम्, परमेतदेव प्राचीनानां विनोदमात्रमासीत् । ये इदानीं प्राचीनग्रन्था अस्माकं सुयोग्यता- ऽऽधायका॒ प्राचीनानां विनोदमात्रफलका आसन्, तर्हि शेयं ते प्राचीनाः स्वयं कियद्-योग्याः स्युः । तेषाञ्चा ऽपि योग्यता- कर्तृसाहित्यं प्रागवश्यं भवेदिति निश्चप्रचम् । अत एव यदि वयं तेषां प्राचां विनोदमात्रफलकान्यपि पुस्तकानि पश्येम, तर्ह्यपि संस्कृतसाहित्यस्य समृद्धिः स्यात् । तिष्ठत्वन्यत् साहित्यम्, तत्र काव्यसाहित्ये भट्टिकाव्यं नलचम्पू—नैषधीय- चरितञ्च विलोक्यन्ताम्—

भट्टिकाव्ये रामायणीयकथाव्याजेन व्याकरणमलङ्कार- शास्त्रञ्च सर्व्वं निवेशितम् । तदीया॒ पाश्चात्या नव सर्गास्तिङन्त- काण्डनाम्ना ख्याताः । हन्त ! का नाम सा प्रसिद्धा विशिष्टा च क्रिया, यैषु नवसु सर्गेषु न समागता ? । एतेषां नवानां सर्गाणां मननेन संस्कृतभाषाव्युत्पित्सूनां क्रियोपयोगविषये सुमहज्ज्ञानं सम्पद्येत । क्रिया हि अनुवादस्य भूषणं भवति । इत॒ एतस्ने प्रसन्नकाण्डे सर्व्वे शब्दार्था ऽलङ्कारा माधुर्य्या- दिगुणा रसभावेशश्च ईदृक्प्रकारेण उपवर्णिताः, येन पठतामित॒ प्रवृत्तिर्हृदयस्य च तुष्टिः स्यात् । इतोऽपि प्राग् विद्यमानाभ्या

मधिकार-प्रकीर्णकाण्डाभ्यां व्याकरणस्य कीदृशी योग्यता जज्ञन्यते—इति न परोक्षं तद्वयसनिनाम्! एवं 'वासुदेवविजय' 'रावणाऽर्ज्जुनीययो' रपि ईदृक्षा छटा दृश्यते।

अधुना 'नलचम्पूर्दृश्यताम्-यद्यपीयं चम्पूरपूर्णाऽस्ति, तथापि यादृशोऽस्यां श्लेषो विरोधः परिसंख्या च प्रतिपदम्, न काव्यान्तरेषु भाषान्तरस्य तथात्वं प्राप्तम्। पठनेन मन आनन्दान्दोलितम्भवति। श्लेषेऽत्र वैशिष्ट्यमक्षराणामितस्ततो विधानेनाऽर्थान्तरभवनं नाम। यमकाऽनुप्रासादिरप्यत्राऽत्यन्तमनोहारी। वासवदत्ताऽप्येवंश्लेषादियुक्ता, परं तत्रेदृङ् माधुर्य्यं न। एवं यद्येतदादिकप्रबन्धे श्लेषविरोधादिच्छटा दृश्यते, अन्यत्र कालिदासादिकवितायां माधुर्य्यगुणस्य साम्राज्यम्। यदि तत्र माधुर्य्यं लभ्यते तर्हि वाणकवितायामुद्भटता, कोऽपि संस्कृतसाहित्यस्याऽवशिष्टः शब्दो न तिष्ठति, यो बाणकाव्ये न समागतो भवेत्। अत एव 'वाणोच्छिष्टं जगत् सर्व्वम्' इत्युक्तिः प्रथिता।

अग्रे नैषधीयचरितं समालोच्यताम्। एतत्पाठक एतस्मिन् प्रवेशे कृते व्याकरणस्याऽऽनन्दमपि विन्दति, अनुप्रासभासां विलासमपि प्रतिपदं लभते। विचित्रा अश्रुतपूर्व्वाश्च कविकल्पना अधीत्य अमन्दानन्दसन्दोहसन्दानितान्तःकरणो भवति। अलङ्कारादीनां सम्प्रयुक्तं निवेशं दृष्ट्वा वस्तुवर्णनायाञ्च कवेर्दूरदर्शितां विभाव्य चमत्कृतान्तःकरणो बोभवीति। एवं सर्व्वेषां भारविमाघप्रभृतिकवीनां काव्यसङ्कलनेन साहित्यस्य सर्व्वाङ्गीणतापूर्त्तिर्दृश्यते।

केषाञ्चिद् रुचिर्यद्येतदादिकृत्रिमतायां न विद्यते, स पुराणेतिहाससाहित्यमवगाहेत। उपनिषद्वेदादीनां पारायणं कुर्य्यात्। संस्कृतसाहित्ये यो यो विषयो गृहीतः, स स चरमसीमापर्य्यन्तं प्रापितः। व्याकरणसदृशनीरसविषये' दर्शनसदृशजटिलविषये आध्या

त्मिकतासदृत्तदुरवगाहविषये, आयुर्व्वेदादिसदृशसकलजनहितैषिविषये एवं पदार्थविज्ञानादिविषयान्तरेष्वप्यस्मत्पूर्व्वजैः कियज्ज्ञानं सम्भृतम् ।

ईदृशं सर्व्वाङ्गीणं साहित्यं कस्या अप्यन्यस्या भाषाया न, तद्भाग्यं संस्कृतभाषामस्तके लिखितमिति निर्व्विवादम् । अद्यत्वे यदाङ्गलसाहित्यस्य प्रौढिराख्यायते, तत्र मूलकारणं संस्कृतसाहित्यमेव, यदनूद्याऽत्र निहितं तद्भाषाविशारदैः । तर्हीदृश्यपि भाषा यदि राष्ट्रभाषात्वयोग्या नाऽऽख्यायते, तर्हि तु तथा वक्तारो वन्दनीया (?) एव । यद्यस्या भाषायाः काठिन्यमभिलक्ष्यतैरेवमुच्यते, तर्हि ते नूनं स्खलन्ति, काठिन्यं त्वारम्भे सर्व्वत्रैव । वर्णमालाशिक्षणाऽऽरम्भेऽपि महाकाठिन्यं भवति सर्व्वभाषासु ।

## ११ के ते आधुनिकशब्दा येषां संस्कृतसंस्करणमिष्यते।

आङ्गलराज्येन नव्याविष्कारा वस्त्रादिषु यन्त्रादिषु नव्यवस्त्वन्तरेषु च ये विहिताः । तेषां सर्व्वेषामेव संस्कृतसंस्करणमिष्यते । यद्यपि " " एतदादिचिह्नान्तर्गतांस्तांस्तान् पदार्थान् संस्कृतभाषायामपि स्थापयित्वा कार्य्यं निर्व्वोढुं शक्यते, तथापि भावियुगे संस्कृतभाषायामेतदादिकन्यूनताऽवश्यं मन्तव्या स्याद् यद्–हन्त ! संस्कृतसाहित्यमपि भाषान्तरसाहित्यवत् त्रुटियुक्तं वर्त्तते, यत्रैतदादिकशब्दानां संस्कृतमपि घटयितुं न शक्यते! तदा ज्ञातव्यम्–यदीदृशत्रुटिपूर्णया भाषया राष्ट्रभाषात्वसिद्धान्तं समर्थयितुं किं वयं परेषां दृशि ह्रीणा न स्याम ?। अत्र विषये संस्कृतविद्वद्भिरालस्यं परेषाञ्च सुविधा उपेक्ष्यताम् । अन्यथा शनैश्शनैर्मूर्द्धिभिन्नभाविकशब्दप्रयोगेऽस्मदीयभाषाया रूपमपि विचित्रं स्यात् । एषां संस्करणं यद्यपि कठिनं नाऽस्ति, तथापि एकेन निर्म्मितं संस्कृतमपरो न रोचयेत अतोऽत्र विशिष्टानां पञ्च-

संख्याकानां विदुषां समवायोऽपेक्ष्यते। संस्कृताऽनुरागिणी जनता सम्भूय तेषां पञ्चानां नाम योग्यतानुसारं समाचारपत्रेषु निर्धारयेत्। ततस्तेषां विशिष्टविदुषां कर्त्तव्यमेतद् यत्–ते स्वयमपि संस्कर्त्तव्यानां नव्याविष्कृतशब्दानां सूचीं निर्म्मान्तु । संस्कृतस्य विद्वदन्तराण्यपि च तादृशशब्दसूची प्रेषयितुं प्रेरयन्तु। तदा च तेषामकाराद्यनुक्रमणिकां निर्म्मान्तु । ततश्च तेषां तेषां शब्दानां ते पञ्च विद्वांसः संस्कृतं सम्भूय निर्द्धारयन्तु। ततोऽन्यान् विदुषोऽपि तत्तच्छब्दानां स्थानापन्नसंस्कृतशब्दगवेषणार्थं स्वपार्श्वे च तत्प्रेषणार्थं प्रेरयन्तु। ततस्ते पञ्च विद्वांसः पारस्परिकपरामर्शेन तेषु शब्देषूपयोगिनो न्याय्यांश्च शब्दान् गवेषं गवेषं तत्सङ्ग्रहं कुर्व्वन्तु। एकैकशब्दस्य भिन्न-भिन्नस्थाने भिन्नार्थकतया एकैकपर्य्यायस्थापनेन यदि तैरसौविध्यमनुभूयेत, तर्हि पञ्चषान् पर्य्यायान् संगृह्णन्तु। तत्र पर्य्यायवाचकेषु 'केचित्तु पर्य्यायास्तन्नवीनशब्दसदृशवर्णवन्तो भवेयुः, केचिच्च तद्गुणप्रदर्शका भवेयुः, एवं योगरूढास्ते भिन्नभिन्न-पर्य्यायाः सङ्ग्रहीतव्याः। एकैकशब्दस्य बहुपर्य्यायवाचकगवेषणेऽस्माकमयमभिसन्धिर्यद्—एक एव पर्य्यायशब्दः सर्व्वत्राऽऽनुगुण्यं न भजते, अन्यथा—'द्वयं गतं सम्प्रति शोचनीयतां समागमं प्रार्थनया पिनाकिनः' इत्यत्रत्यं 'पिनाकि' पदं दुष्टं न स्यात्। परमत्र शिवस्य निन्दाया अभिप्रेतत्वेन 'कपालिनः' इत्येव तस्य पर्य्यायान्तरमानुगुण्यं भजते—न 'पिनाकिनः, इति। 'पिनाकिनः' इति तु वीरताया मानुगुण्यमश्नुवीत। एष एव बहुपर्य्याय-वाचकसंग्रहलाभः। यथा वा— 'सिफारिश' 'शिकायत' इति शब्दौ स्तः। 'सिफारिश' इत्यस्य संस्कृतं केवलं 'गुणप्रशस्तिः' 'शिकायत' इत्यस्य च 'अपवादः' इत्येकैकमेव पर्य्यायवाचकपदं नियम्येत, तर्हि 'उसने मेरी सिफारिश (प्रशस्तिः) लिख दी थी'

'इस दोष के कारण उसकी बहुत शिकायत ( अपवादः ) हुई' इति वाक्ययोस्तादृशसंस्कृतस्याऽऽनुकूल्ये ऽपि 'मैं आपको अमुक के लिये 'सिफारिश' करताहूं, मुझे आपसे बहुत 'शिकायत' है' इति वाक्ययोः 'सिफारिश' 'शिकायत' शब्दयोः 'प्रशस्तिः' 'अपवाद' इति संस्कृतमनुकूलं न भविष्यति। एतदादिकस्थले 'सिफारिश' इत्यस्य 'अनुरोधः इति, 'शिकायत' इत्यस्य 'उपालम्भः' इति संस्कृतमेव प्रकृतानुगुणं भवेत्। एवं भिन्न भिन्नवाक्येषु स्वारस्यं दृष्ट्वा भिन्नभिन्नपर्य्याया अन्वेष्टव्याः। एवं 'मोटर' प्रभृतिशब्दानां यत्र यौगिकगुणशब्दा अन्वेषणीयस्तत्र 'मरुत्तर' मृत्तर, प्रभृतयस्तत्सदृश संस्कृतशब्दा अपि गवेषणीयाः। यतो हि तत्सदृशशब्दस्य–यथा शीघ्रं प्रभाव पतति; तथा यौगिक-शब्दस्य न। एवं सर्व्व दृष्टिकोणेन एकैकशब्दस्य बहुषु पर्य्याय-वाचकेषु सङ्गृहीतेषु भिन्नभिन्नदृष्टिकोणवतां संस्कृतज्ञजनानां भिन्नभिन्नरुचिवशात् स्वरुच्यनुकूलशब्दस्थापनमनायासेन भवितुं शक्ष्यति।

ततः प्रधानसम्मेलनेन तत्पुस्तकं मुद्रापयित्वा संस्कृतानुरागिजनतायां स्वल्पमूल्येन तत् प्रचारणीयम्। तेषामेव च पदानां प्रयोगाय जनता कौशलेन ( न तु प्रसह्य ) प्रेरणीया, येन संस्कृतसाहित्ये आपाततो भासमानेयं त्रुटिरपि व्यपगच्छेत्। संस्कृतसाहित्यस्याऽप्यभिवृद्धिः स्यात्! अद्यत्वे आङ्गलसाहित्यस्य तदीयपदानाञ्च ईदृशी वृद्धिरीदृशश्च प्रसारो जायमानो वर्त्तते ( प्रसह्यकारितां विनैव ) यत्—कोऽपि तानि विना, वार्त्तां कर्तुमेव न समर्थो भवति। एकस्मिन् वाष्पयानाऽवस्थानस्थाने ( स्टेशन ) राजकीयविद्यालय ( गवर्नमेण्ट स्कूल- ) स्थाः शिक्षकाः ( टीचर ) रविवारदिने भ्रमणार्थमगुः। तत्र त्रैस्त्रिचतुर घण्टा-परिमितं भ्रमणं निर्णीतम्; प्रतिज्ञातञ्च, यद्—एतद्—भ्रमणे

ऽस्मासु हिन्दीभाषामालपत्सु को ऽपि कमपि आङ्गलभाषिकशब्दं न प्रयुञ्जीत। 'स्कूल' इत्यस्य स्थाने 'पढाकू मुंड़ियों दी थां' इति विस्तीर्णं नाम कामं कथनीयम्; परमाङ्गलभाषिकपदं न प्रयोक्तव्यमेतत्—त्रिचतुर्घण्टापरिमिते समये। यो यावन्ति पदानि आङ्गलभाषया उच्चारयेत, स तावताम् 'आनकानां' दण्डं दद्यात्। तथैव भूतम्। सर्व्वं एवोऽवधाय हिन्दीभाषामवादिषुः। तथापि कश्चित् स्वाभाविकतावशात् कदाचित् कथयति स्म, यत्-'चलो स्टेशनमास्टर से मिलें' तदा तस्माद् दण्डो गृह्यतेस्म। यस्तत्र 'गाडी ठहरने की जगह के मालिक से मिलें' इत्यसम्बद्धमपि कथां न कथयेत; तस्माद् दण्डो न गृह्यते स्म। एवं बहव एवाऽऽङ्गलविद्यालयाऽध्यापकाः स्वभावजन्यदोषात् तादृशप्रमादानकुर्व्वन्नेव, येन दण्डस्वरूपे कतिचिद् रूप्यकाण्यत्र जातानि, यैस्ते फलमिष्टान्नादीनि क्रीत्वा उदरदेवोपासनामकुर्व्वन्। कदाचिद् 'रेलवे लाइन को पार करें, इति कथयन्तिस्म। कदाचन 'रेल आने वाली है' प्लेटफार्म की टिकट खरीदें, इति प्रयुञ्जते स्म। कदाऽपि—'मास्टरजी, आप आगे चलें' इति कथयन्ति स्म। इत्यादि। कथनस्येदमभिप्रेतम्, यद्—आङ्गलभाषिकशब्दा अस्माकमित्थमस्थिमज्जासम्पृक्ता जाताः, यत्—तेषामवश्यकथनीयताऽऽपतति। परं संस्कृताऽनुरागिभिर्विद्वद्भिरयं दोषः संस्कृतसाहित्यादपसारणीय एव। यथा—भारतवर्षे वैदेशिकवस्त्रपरिधानं, वैदेशिकवस्तूपयोगश्चाऽनुचितं मन्यते, तथाऽस्या देशिकभाषायां वैदेशिकशब्दा अप्यनुचिता दृश्यन्ते। परं यावद् देशिकवस्त्राणामसज्जायां वैदेशिकवस्त्रप्रयोगः क्रियते, ततो देशिकवस्त्रेषु सज्जितेषु सत्सु वैदेशिकवेषभूषलोभवशात् 'खद्दर' निर्म्मितः कञ्चुकः (कोट) 'खद्दर' निर्म्मितश्च आङ्गलपादयामः, (पतलून) देशनिर्म्मिताऽऽङ्गलोपानश्च

( बूट ) परिधीयते, तथैव ईदृक्कोषनिर्म्मितिपर्य्यन्तं वैदेशिकशब्दाः " " इति चिह्नविशेषे, ततस्तत्सदृशशब्दप्रयोगे (यथा -'मास्टर' इत्यस्य 'मास्तरः' 'कौलेज' इत्यत्र 'कालेजः' इति ) ततश्च कोषप्रचारे नियमिताख्यातनिष्पन्नकृत्तद्धितपदप्रयोगे च सर्व्वैः सज्जीभाव्यम् , येन च संस्कृतसाहित्ये एतदादिकशब्दाऽभावो नव्यसंस्कृताऽनुरागधारिणां दृष्टौ न खटखटायेत । वयमीदृशशब्दानां ससंस्कृतपर्य्यायां सूचीं पुनः कदाचिदुपस्थापयितास्महे—अधुना विस्तरभिया विरमामः॥ संस्कृतस्य राष्ट्रभाषात्वसिद्धान्तप्रचारकोऽपि 'संस्कृतम्' सम्पादकः कथमीदृशशब्दान् ( आङ्गलिकान् ) प्रयुङ्क्ते—इति न शङ्कनीयं जनैः । वस्तुतः स ईदृशाङ्गलशब्दानां संस्कृतिमवश्यं वष्टि, प्रत्युत हृदयेन वष्टि । परन्तु तस्येदमभिप्रेतं यद् यावद् ईदृक्शब्दानां परस्परं सम्भूय संस्कृतपर्य्याया न निर्द्धार्य्येरन् , तावद् 'मुण्डे मुण्डे मतिर्भिन्ना' इति न्यायात्तत्तच्छब्दस्य एकेन निर्मितं संस्कृतमपरो न रोचयेत, अथवा स्वनिर्द्धारितं शब्दमन्येन निर्द्धारिताच्छब्दाद् वरीयः साधयितुं कोलाहलं कुर्व्वीत । एवं जाते सति 'यूयं यूयं वयं वयम्, इति परस्परं विरोध उपतिष्ठेत । पारस्परिके विरोधे च निष्पन्ने वराकी शोच्या संस्कृतभाषाऽन्यदपि शोच्यत्वं विभृयाद् । यत उभौ कस्मैचिदुद्देश्याय कलहकारिणौ जनौ, कलहे प्रवृद्धे साफल्यस्य चाऽलाभेऽभीप्स्यमानमुद्देश्यमेव मुक्त्वा तृतीयं पन्थानमनुधावतः । एतद्विरोधजन्यदुष्फलाद् बिभ्यत् 'संस्कृत' सम्पादक इमं पन्थानं न स्वीकृतवान् । इतश्च तेन संस्कृतस्य भाविलाभाय राजनीतिरप्यूरीकृता सा चेयम् ।—यद् अस्माभिः संस्कृतज्ञानां संख्या वर्द्धनीया । ये संस्कृतज्ञाः सन्ति, ते तु तथा सन्त्येव, एवन्तु प्राक्तनी एव संख्या स्थास्यति, संख्यावृद्धिः कथं भवेत् ?। विचारे सति तेन दृष्टं यद्-आङ्गलोद्भापिका अपि जना यदाऽस्याः संस्कृतभाषाया

अभिमुखं समागच्छेयुः, तदा संस्कृतभक्तानां संख्यावर्द्धनमारभ्येत। परं तेऽत्रागच्छेयुरेव कथम् ? । तत्राऽयमेवोपायस्तेन चिन्तितो यद्-यदा आङ्गलोर्दुभाषिका ज्ञास्यन्ति यद्-आङ्गलोर्दुप्रभृति प्रचलितशब्दानां संस्कृतभाषायां योजनेऽपि वयं संस्कृतज्ञत्वेनाऽऽख्यातुं शक्याः, तदाऽल्पसंस्कृतपठनेऽपि वयमत्र साफल्यं लप्स्यामहे-इति विचार्य परम्परातो भारतीया भारतभारतीश्रद्धालवश्चाङ्गलोर्दुभाषाभिज्ञा इह प्रवेशं प्रारप्स्यन्ते। प्रवेशे च जाते शनैश्शनैस्तेऽस्याः पूर्णश्रद्धालवः स्युः। अयमेवोपायश्चिन्तित आसीत् 'चन्द्रकान्तोपन्यासप्रणेत्रा वाराणसेयेन स्वर्गीय-बाबू-देवकीनन्दनेन।

स हिन्दीभाषां प्रचारयितुमुपन्यासं महत् साधनं मेने। तदर्थं 'चन्द्रकान्तोपन्यासं' प्राकाशयत्। तेन बहूनां जनानामनुनयेऽपि स उपन्यास उर्दूभाषायां न प्रकाशितः। एवं हिन्दीभाषाप्रेम्यपि स प्रचलितोर्दुशब्दान् उपन्यासस्य हिन्दीभाषातो न निरसारयत्। अस्मात् कारणात् स हिन्दीकोविदानामाक्षेपास्पदमभ्यभूत्। परं तेन स्वोद्देश्ये हिन्दीभाषाया भाविमङ्गलं विविच्य ते आक्षेपा उपेक्षिता एव। तेष्वेव दिनेषु बाबूहरिचन्द्रश्शुद्धहिन्दीभाषामयानुपन्यासान्, बाबू शिवप्रसादसितारेहिन्दश्च प्रचलितोर्दुशब्दसंवलितोपन्यासान् प्राकाशयताम्। परं फलं किञ्जातम्, बाबू शिवप्रसादस्य बाबू देवकीनन्दनस्य चोपन्यासाश्शीघ्रं प्रसृता अभूवन्। बाबू हरिचन्द्रस्य पुस्तकानि कोऽपि क्रीणात्येव न स्म। एवं प्रचलितोर्दुशब्दान् प्रयुञ्जानो बा० देवकीनन्दनः समये २ तादृशानि हिन्दीपदानि च समुपयुञ्जान उर्दूप्रियां जनतां क्रमशो हिन्दीप्रेमवतीं चकार। इत्थं क्रमशश्शुद्धहिन्दीप्रचारे जाते ततो जना बा० हरिचन्द्रस्याऽपि पुस्तकानि क्रेतुं प्रवृत्ताः। यदि बा० देवकीनन्दनप्रभृतयो हिन्दीभाषाया भाविमङ्गलमभिलक्ष्य उर्दूशब्दोपादाने

प्रवृत्तिं कृत्वा क्षेत्रनिर्म्माणं नाऽकरिष्यन्, तदा याऽद्यत्वे संस्कृत-शब्दमिश्रितहिन्दीभाषा समाचारपत्रेषु दृश्यते, साऽद्य नाऽद्रक्ष्यत। अयमेव स्वकीयो भावो वा० देवकीनन्दनखत्रीमहोदयेन चन्द्र-कान्तासन्तत्याश्चतुर्विंशतितमभागे कण्ठत उक्तः। ईदृश एव भावः 'संस्कृतं' सम्पादकस्य। स सर्वेभ्यः प्राक् संस्कृतभाषाया राष्ट्र-भाषात्वसिद्धान्तस्य जनताऽग्रे समुपस्थापकः कथं खलु संस्कृत-भाषायाम् उर्द्वाङ्गलशब्दान् रोचयेत। तत्रैकमात्रमिदमेव कारणम् यद्-गताद् भूयसः कालात् संस्कृतभाषाऽत्यन्तह्रासिम्नि वर्त्तते। तस्या उन्नामः प्रचलितशब्दानां विरोधे कृते कथं स्यात्? 'सति कुड्ये चित्रं भवति'। यदि संस्कृतभाषैव न तिष्ठेत्, तर्हि वयं कस्या उन्नतिं राष्ट्रभाषात्वं वा कुर्य्याम? । तत्राऽयमेवोपायो यद् अद्यत्वे या भाषा उन्नतिपथे वर्त्तते, तस्या आश्रयेण इयमपि संस्कृतगीः कथञ्चिदुन्नमिता क्रियेत। यद्यपि भिन्नभाषिकपदानां संस्कृतभाषायां निवेशेन संस्कृतभाषायाः परमाऽप्रतिष्ठा, तथाऽपि कुसमये सुसमयस्य प्रतीक्षाऽपि कर्त्तव्या भवति। "उपनतभयैर्यो यो मार्गो हितार्थकरो भवेत्, स स निपुणया बुद्ध्या सेव्यो महान् कृपणोऽपि वा।" "कौर्मं सङ्कोचमास्थाय प्रहारानपि मर्षयेत्" "यद्वा तद्वा विषमपतितः साधुवागर्हितं वा। कालाऽपेक्षी हृदयनिहितं बुद्धिमान् कर्म कुर्यात्।" "किं गाण्डीवस्फुरदुरुघनाऽऽस्फालनक्रूर-पाणिर्नाऽऽसीद्लीलानटनविलसन् मेखली सव्यसाची?" "द्रौपद्या ननु मत्स्यराजभवने घृष्टं न किं चन्दनम्?" इत्यादिनीतिवचनान्यपि न विस्मर्त्तव्यानि भवन्ति। ईदृशीमेव नीतिमूरीकृत्य स प्रचलितशब्दानामपरिवर्त्तनविधया प्रयोगे संस्कृतभाषाया मङ्गलं पश्यति। तस्याऽयमभिप्रायः सर्व्वथा नाऽस्ति यद्-आङ्गलादि-भाषाप्रचलितशब्दानां संस्कृतसंस्करणं क्रियेतैव न। मैवम्। अस्तु। सर्वेषां भिन्नभिन्ना दृष्टिकोणा भवन्ति, यथा कयाऽपि विधया

सर्व्वैः संस्कृतभाषाया उन्नामो विधेय इत्युदीर्योऽयं विचारः समाप्यते ·

## १२ संस्कृतप्रचारसाधनानां विवरणम्।

यावद् संस्कृतप्रचारस्य नव्यसाधनानि विद्वद्भिर्नाविष्क्रियन्ते, तावत् तदनुरागिभिर्विस्तृत्वरीणाम् अन्यासां भाषाणां प्रचारे तद्भाषाऽभ्यस्तैरवलम्बितानां साधनानामुपयोगो विधेयः। तैः स्वभाषाप्रचारार्थं विविधा विश्वविद्यालया उद्घाटिताः, उपाधयः समार्प्यन्त, प्रशस्तिपत्राण्यदीयन्त, स्त्रपरीक्षोत्तीर्णायाऽध्यापकता व्यश्राण्यन्त, छात्रवृत्तयः पारितोषिकाणि वा व्यभज्यन्त तथाऽत्राऽपि कर्त्तव्यम्। यावती प्रसिद्धिश्चाऽद्यत्वे उर्दुभाषाया आङ्गलभाषायाश्च, न तावती भाषान्तराणाम्। तत्र कारणं राज्यवलम्। राजा चाऽऽङ्गलः, अतस्तद्भाषया त्ववश्यमेव प्रसरणीयम्। परमेतदवश्यं विचिन्तनीयं यद्-उर्दुभाषा कथमद्यत्वेऽपि विस्तृता। औरङ्गजेवकाले यद्युर्दुभाषाया बलमभविष्यत्, तर्हि तत्राऽऽश्चर्य्यं नाऽऽसीत्। परमधुना कथं तत्प्रचारः?। कारणे विविच्यमाने एतन्निःसरति यद्-मोहम्मदैः प्रयत्य सा भाषा न्यायालयेषु प्राधान्यं लम्भिता, इतश्चाङ्गलेभ्यः प्राक् तेषामन्तिमं राज्यमप्यासीद्, येन सा प्राग् लब्धप्रसाराऽप्यासीत्, तस्मिन्समये हिन्दीसंस्कृतभाषे मृते आस्ताम्। अत एव तस्याः प्रचारः। आङ्गलानां दृष्टौ यथा मुसल्माना वैदेशिकास्तथा हिन्दवः, पुनस्तेषां मोहम्मदेष्वेव कथं पक्षपातः?। तत्र कारणं हिन्दूनां दोषः। राज्ञा सह सम्भूय यथा स्वकीयं कार्य्यं कारयितुं शक्यते, न तथा तस्मात् पार्थक्यं लब्ध्वा कार्यं भवेत्। मौहम्मदेष्वियं विशेषता स्थिता। परं हिन्दवस्तु प्रायो राजविरोधिनो जाताः, तदा तेषां कथं भवेत् कार्य्यम्? इतश्च हिन्दुषु मतबाहुल्यमपि तेषां नाशकृद् वर्त्तते। कश्चित् स्वं

'हिन्दु' रिति लेखयति, कश्चिच्च 'आर्य' इति कश्चन च 'सिक्ख' इति, कोऽपि 'जैनी' इति, कश्चन आत्मानं 'बौद्ध' इति लेखयति। तर्हि राजपुरुषैरेतद्विषये कदर्थितैर्भूत्वा मुसलमानेषु चैकमेव नाम निहितं दृष्ट्वा हिन्दूनां नाम 'नान मौहम्मडन' इति स्थापितम्। एवं तैरैक्यम्, यद्-मौहम्मदास्तु उर्दु भाषामेवेच्छन्ति। हिन्दुषु तु कश्चिद् वङ्गभाषाम् इतरो हिन्दीभाषाम् एको गौर्ज्जरीं वष्टि; अन्यो माहाराष्ट्रीम्। कश्चिद् पञ्चनदीयां भाषां वष्टि अपरं आन्ध्रीम्। एवं हिन्दुषु मतभेदं दृष्ट्वा तैरुर्दु भाषैव प्राधान्यं नीता। यथैतद् मौहम्मदानां प्रयत्नस्य फलम्, तथा सर्वे हिन्दवो ऽपि सम्भूय पारस्परिकवैयक्तिक वैमत्यं परिहाय न्यायाधिकरणेषु संस्कृतभाषायाः प्राधान्यं मन्येरन्; तदा संस्कृतभाषा तत्र प्रयुज्येत। तत्प्रयोगेण धनप्राप्तौ च सत्यां सर्व्वेषामितो ध्यानं पतेत्। यतो ऽस्मिन् धनयुगे यस्मिन् पथि धनं दृश्यते; जनास्तत्रैव पथि धावन्तीति चतुरस्रम्। परं हिन्दुषु ईदृशो भेदव्याधिः सङ्क्रान्तो यत्—ते संस्कृतभाषायै द्रुह्यन्ति। या हिन्दीभाषा संस्कृतस्याऽपभ्रष्टा पुत्री, या च संस्कृता ऽभिमुखं धावन्त्यपि संस्कृतद्रोहे ऽपि लग्ना, यथा—'विद्वान् भगवान्' एतदादिकहलन्तशब्दान् स्वारान्तानङ्कयन्ती 'ध्वनि'-'अभिलाषः' महिमा, कायः, राशिः, व्याधिः, विधिः, अवधिः, उपाधिः, समाधिः, एतदादिपुंलिङ्गान्तानपि शब्दान् स्त्रीलिङ्गे विपरिणमयन्ती, ततो हिन्दीभाषा ऽध्ययना ऽनन्तरमेव संस्कृताऽध्ययनप्रवणाञ्जनानपि एतदादिकेषु भ्रमेषु पातयन्ती हिन्दीभाषा वर्त्तते, अद्य जनास्तस्याः प्रचारायोद्यच्छन्ते।

यद्यप्यस्याः प्रचारो ऽपि संस्कृतभाषाप्रचारकृते शुभलक्षणत्वेना ऽऽख्यातुं योग्यः, तथाप्यस्माभिरस्या हिन्दीभाषा

ऽनुरागिण्या जनताया अयं भाष्यभिप्रायो न क्वचिद् दृश्यते; अत एवा ऽनुमीयते यद्—इयं हिन्दीभाषानुरागिणी जनता संस्कृतभाषायै अवश्यं क्रोत्स्यति। तत्र कारणमिदम्, यद्—हिन्दी-भाषायां प्राचीनसाहित्यं न तथा ऽऽधिक्येन वर्त्तते, तत्र सनातन-धर्मस्य गन्धः स्यात्। संस्कृतसाहित्ये तु अक्षरे अक्षरे, मात्रा-यां मात्रायां सनातनधर्मगन्धः। हिन्दीप्रचारणे ऽधिकयोग आर्य्यसमाजस्य। संस्कृतसाहित्यप्रसारे तु आर्य्यसमाजस्य विध्वंसो भवेदिति विविच्या ऽऽर्य्यसमाजः संस्कृतप्रचारे तथा नोद्यच्छते। तस्य प्रबलं प्रमाणमेतद् यद्—आर्य्यसमाजेन सं-स्कृतपाठशाला—क ऽपि नोद्घाटिताः। यत्र गुरुकुलाद्याडम्बरेण संस्कृतस्य किञ्चित्प्रचार आर्य्यते ऽपि, तत्रा ऽपि मुख्यो बलिः संस्कृतेतरभाषाभ्य एव दीयते। अथ च संस्कृतं तेन प्रकारेण पाठ्यते; येन अध्येता खण्डनमण्डनमात्रव्यसनी भवेद्, अधिक-योग्यताको न स्यात्, शब्दानां 'तोडमरोड़ने' च पटुः स्याद्। अत एव यदि वयमप्येतैः सह सङ्गत्य भविष्यदाशया एतेषां हिन्दीभाषाप्रचारायैव योगदानं कुर्य्याम्; तर्हि बङ्गादिप्रान्तीयानां हिन्दीविरोधेन न सर्व्वत्र हिन्दी प्रसरेत्, एषाञ्च हिन्द्यनुरागिणां विरोधेना ऽयं संस्कृतमपि कदाचिन्न प्रचरेत्, अत एवा ऽस्मा-भिर्हिन्दीभाषाप्रचारमात्रे संलग्नैर्न भूत्वा संस्कृतभाषा प्रचारणेऽपि आन्दोलनानां व्याख्यानानां समाचारपत्राणां प्रतिष्ठितसङ्घानां (डेपुटेशन) च सृष्टि—कार्य्या। तदा आ[illegible]स्यते—स प्रयत्नः कदाचिन्निकटभविष्यति सफलः स्यात्। तत्राऽस्यां भाषायां राज्ञा ऽनुग्रहदृक्पातनायाऽवश्यं यत्नो विधेयो येन तदधिष्ठित-विद्यालयेष्वस्याः सम्यगध्ययनम् (न तु आघ्राणमात्रम्) अनिवार्य्यं भवेद्, येन देशस्या ऽस्य कल्याणं जागृयात्।

## १३ संस्कृतशिक्षाप्रणाल्यां कीदृक्षः सुधार उचितः।

अद्यत्वे सुधारशब्दस्य कोलाहलो यत्र तत्र दृश्यते। वस्तुतः स नाऽपि सुधारः स्यात्, प्रत्युत संहारः कथं न स्यात्, परं जनाः सुधारशब्देन संहारेऽपि क्रियमाणे परम-प्रीता भवन्ति। अत एव ते प्रतिदिनं कण्ठं भित्त्वा 'सुधारः स्यात्, सुधारः स्याद्' इति कलकलं कुर्व्वन्ति। यथा तेऽलसानां धूर्त्तानां वा स्वार्थपूर्त्यर्थं कामपराणामसंयमिनां वा कामपूर्त्यर्थं स्वकीय-विविधगुप्तस्वार्थसाधनार्थं प्राचीनधर्म्मनियमविपरिवर्त्तनाऽपर-पर्य्यायं सुधारं चिकीर्षन्ति, तथा तैः प्राचीनसंस्कृतशिक्षा-प्रणाल्यामपि सुधारश्चिकीर्ष्यते। ते एतन्न जानन्ति यत्—प्राचीन-संस्कृतप्रणाल्यां यथा जनानां तद्विषये परिनिष्ठितता भवति स्म, अद्य विविधसुधारेऽपि कृते पूर्व्वसदृशी परिनिष्ठितता न भवति। केवलं तद्भाषाया आघ्राणमात्रं भवति। अद्य जनाः प्रसीदन्ति यत्—संस्कृतभाषायाः सुमहान् प्रचारो जजन्यमानो विद्यते, पुरा एतावान् एतादृशश्च संस्कृतप्रचारो नाऽविद्यतेति। अत्र वयमपि न नकारं कुर्म्महे। यावान् प्रचारोऽद्यत्वे भूयस्यां जनतायां संस्कृतभाषायाः प्रवर्द्धमानः, तावान् प्राङ् नाऽऽसीच्च (नाऽऽसामास) तथाप्येतदपि वयं निस्सङ्कोचमभिदध्महे यत्—तात्कालिका यथा संस्कृतभाषायां निष्णाता भवन्ति स्म, अद्य काम परीक्षोत्तीर्णानां भूयिष्ठा वृद्धिर्जाता भवेत्, परं तेषु सा 'निष्णा-तता' सर्व्वथा न दृश्यते। अद्य तेषां प्राचीनानां वाक्यजातस्य तद्गतविषयस्य चाऽवबोधार्थं तेषु टीका अपेक्ष्यन्ते। विविधसुधा-रकाणामिदं सुफलं (?) दृश्यते यत्–प्राग् यथा पञ्चनदीयप्राज्ञपरी-क्षायां योग्यता जायते स्म, अद्य सा शास्त्रिश्रेण्युत्तीर्णतायामपि न जायते। एवमुत्तरोत्तरमलसानामपरिश्रमिणाञ्च सौविध्येषु कृतेषु कदाचित् पञ्चनदीयशास्त्रिश्रेणी प्राज्ञश्रेणी भवेत्, प्राज्ञश्रेणी च

वर्णमालाऽध्ययनाऽऽरम्भकर्त्री श्रेणी भवेद् । नाऽत्र मृषोद्यस्य लेशोऽपि ।

तथापि यदाऽस्माकं समक्षमयं प्रश्नः समुपस्थाप्येत यत् संस्कृतशिक्षाप्रणाल्यां कीदृशः सुधार उचितो भवन्मते तर्हि वयं तत्रेत्थं प्रतिवक्ष्यामो यद्—अत्र स सुधारः कर्त्तव्यो यद् अद्यतनैः सुधारकाभासैरस्यां यः सुधारश्चिकीर्ष्यते तस्य संहारः कार्य्यः। पुनः प्राक्कालिकी शिक्षाप्रणाल्यवलम्बनीया। कामं तया प्रणाल्याऽल्पा एव जनाः स्थास्यन्ति संस्कृतनदीष्णाः तथापि तेभ्योऽल्पेभ्यः परिनिष्ठितेभ्यस्ते सुभूयिष्ठा अपि घ्राणमात्रकर्त्तारो व्यर्था एव--'एकश्चन्द्रस्तमो हन्ति, नहि तारासहस्रकम्'। 'क्षणं प्रज्वलितं श्रेयो नहि धूमायितं चिरम्'। 'मृदङ्गकार्य्यं न भवेत्कदाचित् परश्शतैर्मूषकचर्म्मभिर्हि'। 'व्यर्थस्तेषां प्रयासो नहि शतकमपि क्रोष्टुवर्गस्य किञ्चिच्छक्तं कार्य्यं विधातुं भवति खलु यथा केसरिक्षुद्रपोतः (इति प्रथमवर्षीय 'सुप्रभात' स्य १० संख्यायां मल्लेखे मद्वचनम्)।

प्रारम्भिकशिक्षा यद्यपि सरला कार्य्येत्यत्र नाऽस्माकं विसंवादः, तथापि सा शैघ्र्येण न समापनीया। मूलं यावद्दृढं भवेत्, तदुपरि निर्म्मीयमाणः प्रासादोऽपि सुचिरं तिष्ठेद्। अद्यत्वे जना ईदृगाघ्राणमात्ररसिकाः संवृत्ताः, तेषामियमेवेच्छा भवति, यदद्य वयं संस्कृतवर्णमालायाः शिक्षणारम्भं कुर्व्वीमहि—एकमासानन्तरञ्च अस्मास्वीदृशी योग्यता स्याद्, यद्-वयं वेदभाष्यकारा भवेम। परं नैतद्विचारचारु। अद्य जना व्याकरणं नाऽधिजिगांसन्ते, तत्काठिन्याद् बिभ्यति। विनैव व्याकरणप्रवेशं संस्कृतसाहित्ये निरवच्छिन्नं प्रविवक्षन्ति। शोच्यास्ते। हन्त! वैधेयाः! यद् व्याकरणमास्माकभाषाया मूलम्, तस्याः सार्व्वदेशिकतायां, सार्व्वकालिकतायां, समानरूपतायाम्, अपरिवर्त्तने च कारणम्, भवन्तस्तदवलम्बं विना

कथं संस्कृतभाषायां विजिहीर्षवः। परं ते कथं शृणुयुरस्माकं हित-वचनम्। तेऽस्मान् सुधारद्विषः 'पुरानी लकीर के फकीर' इति चाम-नन्ति। ईदृशा एव पठिताऽपूर्णव्याकरणा जना अग्रे गत्वा वेद-मन्त्रस्थपदानां ग्रीवासु छुरिकाः स्थापयन्ति। तेषामर्दनविमर्दनं कृत्वा वेदं वीभत्साकारं शवं कुर्व्वन्ति। स्वमनोऽभीप्सिताऽर्थान् कर्त्तुं सन्नद्धा भवन्ति। अत एव माननीयाः! मद्विचारे तु अयमेव सुधार उचितो यद्-व्याकरणेऽत्यन्तबलम्, ज्ञाने परिनिष्ठितता च-अयमेव सुधारः कार्य्यः संस्कृतशिक्षाप्रणाल्याम्। केवलमलसानां परिश्रम-कातराणां च सुगमतायै विविधसौविध्यानि मा विधायिषत। ईदृग्भ्यः सौविध्येभ्यो वरमेतदेव, यदस्माकं संस्कृतभाषा ऐकदेशिकी कामं तिष्ठेद्। अस्मदीयप्राचीना विद्यारम्भसमयेऽधिकारिणः सुतरां परी-क्षन्ते स्म। अनधिकृतेभ्यस्तु पादप्रवेशमपि कर्त्तुमवसरं न ददतिस्म परमद्यत्वे तादृशानामनधिकृतानां कृते यद्यस्माभिरन्तराया उपस्था-प्यन्ते तर्ह्यद्यतनी क्रान्तिकारिणी जनताऽस्मानपभाषते, अस्मान् 'देशस्य शत्रून्' कथयति। बत! आशासे विचारशीलैरस्मद्धार्दिक आशयो ज्ञातो भवेद्। अद्यत्वे सुधारनाम्ना संस्कृतसाहित्यस्य गले छुरिका प्रवर्त्त्यते। तादृशी छुरिका मौहम्मदकालेनाऽपि न प्रवर्त्तिता-ऽत्र, यादृशीं वर्त्तमानसुधारकाभासा अत्र प्रविवर्त्तयिषन्ति। मौहम्म-दैरस्मद्भाषाया बाह्यस्वरूपं नाशितम्, परं वर्त्तमानसुधारकास्तु अस्या आभ्यन्तरिकमपि निनाशयिषन्ति। एवं जाते सति साऽस्म-द्भाषायाः सर्व्वदेशेषु सर्व्वकालेषु च समानताया विशेषता ध्रुवं कर्पूरायेत नाऽत्र किन्तु परन्त्ववकाशः। आशासे-अत्र संस्कृतज्ञा विमर्शं कार्य्यं कुर्य्युः।

## १४ संस्कृतभाषायां केषां केषां विषयाणां निवेश आवश्यकः

संस्कृतभाषायां कस्याऽपि विषयस्य न्यूनता वर्त्तते एव न।

यदि कथ्येत-भूगोलराजनीत्यादीनामत्र न्यूनता, परमेतदप्यसत्। अस्मदीय—'पुराण' साहित्ये सर्व्वे विषया उपदिष्टाः। अग्निपुराण-मत्स्यगरुडादिपुराणानां पाठः कार्य्यः। तत्र व्यवहारौपयिकं सर्व्वमेव वर्णितम्। एवं प्राक्तनेऽस्मदीयशास्त्रे आयुर्वेदधनुर्वेद-गान्धर्ववेदाऽर्थवेदादौ सर्व्वे विषयाः सन्निविष्टा आसन्। परं तेषु वहवो ग्रन्था मौहम्मदकोपाऽग्नौ दग्धा इति जगद्-प्रसिद्धम्। अद्य-त्वेऽपि क्वचिल्लुप्तग्रन्थानामुद्धारो दृश्यते। तत्रस्योद्धरणेषु क्वचिद् वायुयाननिर्म्माणादिप्रकारं पश्यामस्तर्हि आत्मा महान्तं सन्तोष-माधत्ते।

## कतिचिदुद्धरणानि श्रूयन्ताम्—

'मन्त्रज्ञा ब्राह्मणाः पूर्वं जलवाय्वादिस्तम्भिते। शक्त्युत्पादनं चक्रुः स मन्त्र इति गद्यते॥ दण्डैश्चक्रैश्च सरणि भ्रमकादिभिः। शक्तेस्तु वर्द्धकं यत् तच्चालकं यन्त्रमुच्यते॥ मानवीपाशवीशक्तिकार्य्यं तन्त्रमिति स्मृतम् (यन्त्रार्णवे)। 'घटीयन्त्रं यथा मर्त्या भ्रमन्ति मम मायया' अत्र घण्टीयन्त्रस्य सङ्केतो गरुडपुराणे दृश्यते। 'घट्यैकया क्रोशदशैकमश्वः सुकृत्रिमो गच्छति चारुगत्या। वायुं ददाति व्यजनं सुपुष्कलं विना मनुष्येण चलत्यजस्रम्' इति 'भोजप्रबन्धे' कृत्रिमाऽश्वव्यजनयोर्व्वर्णनम्। पञ्चतन्त्रे कृत्रिमगरुडनिर्म्माणकथा कौलिकवृत्ते। वाल्मीकिरामा-यणे पुष्पकविमानवर्णनम्। भागवतपुराणे शाल्वविमानस्य, कर्दमऋषिविमानस्य च वर्णनम्।

विमाननिर्म्माण प्रकारो यथा—'लघुदारुमयं महाविहङ्गं दृढसुश्लिष्ट तनुं विधाय तस्य। उदरे रसयन्त्रमादधीत ज्वलना-धारमधोऽस्य चाऽग्निपूर्णम्॥ तत्रारूढः पूरुषस्तस्य पक्षद्वन्द्वो-

च्चालप्रोज्झितेनाऽनलेन । सुप्तस्याऽन्तः पारदस्यैव शक्त्या चित्रं कुर्वन्नम्बरे याति दूरम् ॥ इत्थमेव सुरमन्दिरतुल्यं सञ्चलत्य-लघुदारुविमानम्। आदधीत विधिना चतुरोऽन्तस्तस्य पारद भृतान् दृढकुम्भान् ॥ अपः कपालाहितमन्दवह्निप्रतप्ततत्कुम्भ-भुवा गुणेन। व्योम्नो झगित्याभरणत्वमेति सन्तप्तगर्जद्-रसराज (पारद) शक्त्या' इति 'समराङ्गणसूत्रधारे' यन्त्रविधानाऽध्याये ३०, ९७-९८ प्रभृति श्लोकेषु विमानवर्णनम्। यच्चु स्वा० दयानन्देन प्रधयश्चक्रमेकं त्रीणि नभ्यानि क उ तच्चिकेत। तस्मिन् साकं त्रिशता न शङ्कवोऽर्पिताः षष्टिर्न चलाचलासः' ऋ० १।६४। ४८। इति वेदमन्त्रस्याकाशयानपरको ऽर्थो विहितः, स तु निर्मूलः। अस्य मन्त्रस्य, देवता संवत्सरात्मकः कालः। स एव द्वादश-मासपरिधिमान्। ऋतुत्रयं नाभिस्थानीयम्। ३६० दिनानि अराः सन्ति—इत्यादिवर्णनम्, मन्त्रार्था देवतानुसारं भवन्ति न स्वात-न्त्र्येण। तेन स्वा० दयानन्दस्य भिन्नार्थविवरणं तदीयमाहो-पुरुषिकामात्रम्। वेदस्य नाऽयं विषयः प्राधान्येन। अथवा सत्त्वेऽपि तत्र मन्त्रान्तरं मृग्यम्।

अथ कृत्रिमहस्तिनो वृत्तं पठ्यताम्—'यन्त्रेण कल्पितो हस्ती नदन्-गच्छन् प्रतीयते। शुकाद्याः पक्षिणः क्लृप्तास्तालस्या-ऽनुगमान्मुहुः। जनस्य विस्मयकृतो नृत्यन्ति च पठन्ति च। पुत्रिका वा गजेन्द्रो वा तुरङ्गो मर्कटोऽपि वा। वचनैर्वर्तनैर्नृत्यैस्तालेन हरते मनः' समराङ्गण सूत्रधारे ६२-६४। इति कृत्रिमहस्तितुरङ्ग वानरादीनां चालनम्। 'दारुजमिभस्वरूपं यत् सलिलं पात्रस्थितं पिबति। तन्माहात्म्यं निगदितमेतस्योच्छ्रायतुल्यस्य' ११५ श्लो० इति कृत्रिमगजस्य स्वयं जलपानम्।

एतदादिना प्रतीयते यदस्मत्संस्कृतसाहित्ये सर्वे एतदादि'

कविषया आसन्। तथाप्येतदवश्यं कथयामो यद्--वर्त्तमानाऽनुसारमपि भूगोलखगोलादिविद्या, गणितेतिहासादिविद्या, पदार्थविज्ञानविद्या च संस्कृतज्ञानां विदिता भवेत्, तदर्थं ते विद्वांस आमन्त्रणीया ये पौरस्त्यपाश्चात्योभयसाहित्यनिष्णाताः स्युः, ते प्रेरणीया यत्-तादृशग्रन्थान् संस्कृतेऽनुवदन्तु। आङ्ग्लादिकैरस्मदीयप्राचीन-संस्कृतग्रन्थानेव निर्मन्थ्य विविधरत्नानि प्राप्तानि। स्वभाषायाञ्च तेषां निर्माणशैली निर्दिष्टा। अधुना यद्यस्मदीयास्तदादिपुस्तकानामनुवादं कृत्वा तांस्तान् विषयान् अस्यां संस्कृतभाषायां समुपस्थापयेयुः, तर्हि तासां भाषाणामस्मद्भाषायामृणं न भविष्यति, प्रत्युत तासां भाषाणां संस्कृतभाषाद्वारा स्वोपरि सञ्जात-ऋणस्य निर्यातनाय कुसीदमात्रं भविष्यति। तेनाऽत्र संस्कृतविद्वद्भिरवश्यं चेष्टनीयम्, येन संस्कृतसाहित्ये एतदादिकजिज्ञासूनामपि जिज्ञासापूर्तिः स्यात्।

## १५—संस्कृतं राष्ट्रभाषा कथं भवेत्!।

अस्माभिः 'संस्कृत' पत्रस्य राष्ट्रभाषाङ्के एतद्विषये पर्याप्तं विचारितम्। हर्षस्याऽवसरो यद्--मम स विस्तीर्णलेखः 'संस्कृतम् अयोध्या, आनन्द—लखनऊ, 'श्रीः-- श्रीनगर, मीमांसाप्रकाश-पूना' प्रभृतिपत्रैरभिनन्दितः। कृतज्ञताऽवनतमस्तकोऽहं तेभ्यो धन्यवादं ददद्धुना सूचयामि यद्--यद्यप्यस्मिन्नङ्के मया समयाऽभावाद् विस्तरभिया च पाठकानां सेवा यथोचितं न कृता। तथापि यत्किञ्चित् कृतं तदेव बहुमत्वा वैवश्यं मम क्षंस्यन्ते--इत्याशास्यते तथापि पाठकान् प्रेरयामि यत्-'संस्कृतं राष्ट्रभाषा भवेत्' इत्ययं सिद्धान्तः प्राक् स्वहृदये स्थायी कर्त्तव्यः। यावद् भवतां हृदयमस्मिन्सम्बन्धे भवतां सहायकं न भविष्यति, तावद् भवन्त एतद्विषये बहिरेकाक्षरमपि विवरीतुं नाऽलम्भूष्णवः स्युः। तदा स्या-

ख्यानैर्लेखैरेतद्विषयकग्रन्थप्रकाशनैश्च तैरयं सिद्धान्तः संस्कृतजनतापर्य्यन्तं प्रापणीयः। ततो हिन्दीभाषायाम् आङ्गलभाषायाम् उर्दूभाषायाञ्चाऽप्येतद्विषयका लेखाः प्रेष्याः, यैर्भिन्नभाषिकजनताया-मपीदृशाः संस्काराः स्थानं लभेरन्।

अस्या भाषायाः प्रचाराय च हिन्दीसंस्कृतकोषद्वयमवश्यं निर्द्धार्य्यताम्। राजा च सर्व्वविद्यालयेष्वस्याः संस्कृतभाषाया अनिवार्य्यतायै अवश्यं प्रेरणीयः। अथ च जनतायां जर्मनी इङ्गलैण्डयोरपि संस्कृतभाषागतप्रेम्णो वृत्तं समये समये स्थापनीयम्। यतो हि भारतीयाया मूर्खजनतायाः प्रत्युत इङ्गिलशभाषापण्डिताया जनताया जर्म्मनी-इङ्गलैण्डादि कृतप्रशंसायां सत्यामेव तत्प्रशस्यमानवस्तुनि प्रेम प्रवर्त्तते। यदा खलु आङ्ग्लादिभिर्वेदेषु ध्यानं दत्तं तद्विषयकलेखाश्च दत्ता मैक्समूलरादिभिः, ततो भारतवर्षीयाणामपि ध्यानं तेषु प्राप्तम्। यदा खलु आङ्गलादिभिः पुराणानां प्रतिकूलाऽनुकूला च समालोचना कृता, तदा भारतीयानामपि पुराणानामानुकूल्यप्रातिकूल्ये पक्षद्वयमभवत्। यदा खल्वाङ्गलादिभिर्भगवद्गीता मुक्तकण्ठं परिष्टुता, तुलसीगङ्गादयश्च परीक्ष्य प्रशंसिताः, तदा भारतवर्षीयाणामपीतो ध्यानं गतम्। यदा चाङ्ग्लादिभिः प्राचीनसंस्कृत्रिमकामशास्त्रस्याऽनुसन्धानं कृतम्, ततोऽस्मद्भारतीयनामपीतः प्रणिधानं प्राप्तम्। अत एव अत्रत्यायाः परप्रत्ययनेयजनतायाः कृते तेषामेतद्विषयकाऽभिनिवेशस्य यत्र तत्र श्रावणेन जनतायां महान् प्रभावो जायते।

अथ च संस्कृतप्रेमिजनैरेतदपि प्रतिज्ञानीयं यद्—वयं संस्कृतज्ञानां पार्श्वे संस्कृते एव पत्रं प्रहेष्यामः, स्वदैनन्दिन्यामपि ( रोजनामचा ) संस्कृतस्योपयोगं करिष्यामः, सर्व्वाणि संस्कृतपत्राणि चाऽऽनायपिष्यामः, स्वसन्ततिवृन्दे स्वच्छात्रवृन्दे च तद्विषयकम-

वारं करिष्यामः, संस्कृतसम्मेलनानां सदस्या भविष्यामः निःशुल्कं संस्कृतशिक्षां यथाऽधिकारं वितीर्य्य तस्याः प्रसारे चेष्टिष्यामहे संस्कृतविद्यालयानां वृद्धिं संस्कृतनिमशास्त्रार्थप्रतियोगिताप्रसारं विधास्यामहे, संस्कृतभाषायाः प्रत्येकपत्त्रेषु गवेषणाफलस्वरूपस्वाऽमूल्यनिबन्धान् विनाऽपि तत्सम्पादकप्रेरणां, विना वा पुरस्कारलोभं प्रेरयिष्यामहे—एवं प्रतिज्ञाते सति संस्कृतमवश्यं राष्ट्रभाषा भवेत्। ततोऽधिकपरिश्रमे कृते समस्तसंसारभाषा भवेद्। अत्र पारस्परिकवैमनस्यदूरीकरणस्य, सङ्घटनस्य, सङ्कोचदूरीकरणस्य, आलस्यत्यागस्य, संस्कृताऽनुरागस्य च महिष्ठा प्रयोजनीयता, तदैव साफल्यं भवितुमर्हेत्। प्रागीदृशे सिद्धान्ते प्रचारिते जना उपेक्षिष्यन्ते, तत उपहसिष्यन्ति, ततोऽन्तरायान् विधास्यन्ति, परं 'विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः प्रारब्धमुत्तमजना न परित्यजन्ति' इति दिशा एतत्सिद्धान्तस्य स्वीकारकालोऽपि अवश्यं समेष्यति। सुधारकाभासैरीदृशाः स्वसिद्धान्ता धार्म्मिक्यामपि जनतायां प्रसारिताः, ये स्पष्टमधार्म्मिकाः, तेषां स्वकीयनेतृभ्योऽपि विरुद्धाः, तथापि तैः स्वाऽभीष्टाः सिद्धान्ताः प्रचारिताः। प्राग् जनता तदीयसिद्धान्तेष्वत्यन्तमुपहसति स्म, परमधुना जनतायास्तदीयेषु सिद्धान्तेषु यदि सम्यक् प्रवृत्तिः प्रविवृत्सा वा नाऽपि जाता, तथापि भूयस्या जनतायास्तेषां सिद्धान्तेषु सहाऽनुभूतिस्तु वर्त्तते। इदमविहतप्रचारस्य आन्दोलनसातत्यस्य च फलम्। 'मृदुना सलिलेन खन्यमानान्यवघृष्यन्ति गिरेरपि स्थलानि। उपजापविदां च कर्णजापैः किमु चेतांसि मृदूनि मानवानाम्'।

परमयं संस्कृतभाषाया राष्ट्रभाषात्वसिद्धान्तस्तु नाऽधर्म्मः, प्रत्युत देशहिताऽनुकूलः, प्राचीनताऽनुकूलः; तर्हि तत्सिद्धान्तार्थमान्दोलनसातत्ये विहितेऽवश्यं तत्र जनतायाः क्रमेण सहानुभूतिस्ततस्तस्या आचारकालः स्वीकारकालो वा

ध्रुवं समागच्छेत्। "गवर्नमेण्ट" स्य यदा इतो ध्यानं गच्छेत्, गच्छेत्। प्राक् श्रीमद्भिर्देशिकहिन्दुनृपा एव प्रेरणीया यत्—ते स्वकीय 'स्टेटेषु' संस्कृतस्याऽनिवार्य्यतां सर्व्वेष्वधिकरणेषु कुर्व्वन्तु। एवं तत्र प्रचारे सति, जनतायामेतद्विषयकजागर्त्तौ जातायां "गवर्नमेन्ट" स्याऽप्यवश्यमिहाऽवधानं स्यात्। भारतस्य राष्ट्रभाषात्वसिंहासने उपवेष्टुं प्राचीनभारतभारत्यैवाऽधिकृता, नाऽन्या—इति स्थूलामपि वार्तां को न मन्तुं प्रभवेत्। इयमेव भारतकृते स्वाभाविकी भाषा, अन्यास्तु कृत्रिमा एतत्कृते।

अस्मदीया सन्ध्योपासना विना संस्कृतभाषिकमन्त्रान् न भवति, अस्मदीयश्राद्धादिपितृकर्म्म यज्ञादिदेवकर्म्म च विना संस्कृतभाषां न भवति। प्रत्युत तत्र हिन्दीभाषारूपाऽपशब्दप्रयोगे सति प्रत्यवायोऽपि मतः। एवं यदा जननादारभ्य मृत्युपर्य्यन्तं सर्व्वेषु संस्कारेषु संस्कृतस्यैव स्थानम्, तर्हि काऽपरा तद्‌तिरिक्ताऽस्मद्—राष्ट्रभाषा भवितुमर्हेद्। हिन्दीभाषाप्रभृतयोऽस्माकं कृते कृत्रिमा भाषाः। इमा यदि प्रचारसातत्येन अस्माकमस्थिमज्जासम्पृक्ता जातास्तर्ह्यस्माकं स्वाभाविकी संस्कृतभाषा प्रयत्नसातत्येन कथमस्मासु न संक्रामेत्?। ईश्वरस्येयं भाषा, स एवाऽस्याः पक्षपाती। तदैव तु तेन वेदादिकमप्यस्यामेव भाषायामस्मभ्यं दत्तम्, तर्ह्यस्माभिरपि स कथं नैतद्भाषोपासनया प्रसादनीयः?। यदा खलु प्राचीनकाले जैननास्तिकबौद्धप्रभृतयोऽर्वाचीनाकाले च इङ्गलेण्डजर्मनीप्रभृतयोऽप्यस्यां नतमूर्द्धानो जाताः, तर्हि वयमेवाऽत्र न प्रणिदध्याम, तदा कथं न लज्जाऽवकाशोऽस्माकं कृते? प्राग् भारतक्षेत्रे संस्कृतभाषास्रोतो निरवच्छिन्नं प्रवहति स्म, तदा तद् हरितभरितमप्यविद्यत, अद्य संस्कृतस्रोतोह्रसिमकारणादेव तदपि क्षेत्रं ह्रासमुपेयिवद् विलोक्यते। हन्त! प्रत्यक्षेऽप्यस्मिन् विषये कथं न दृक् पतति जनानाम्।?।

अथ च संस्कृतस्य राष्ट्रभाषात्वविधाने एकमन्यदपि मूलं वर्त्तते, न तद्विस्मर्य्यताम्। तदिदं यत्—संस्कृतज्ञजनतायां भूयांसो विद्वांसः सन्ति। तत्र केचिदीदृशा यैः सनातनधर्म्मस्य तत्त्वं वेदादिभ्योऽन्विष्याऽन्विष्य स्वपार्श्वे लिपिबद्धं कृतम्। केचिद् विज्ञानप्रियाः, यैर्नवीनभौतिकज्ञानविषयेऽत्यन्तमुन्नतिः कृता। केचिद् गणितविषये एवं विषयान्तरेषु नदीष्णाः। एतत्खलु स्वाभाविकं यद्—यो यस्य विषयस्योत्कृष्टविद्वान् भवेत्, स तं विषयं जनतासमक्षेऽप्यवश्यमुपतिष्ठापयिषति। तत्र ये वक्तारो भवन्ति; ते तु काञ्चित् सभामधिकृत्य तद्विषये स्वहार्द्दिकोद्गारान् प्रकाशयन्ति। परं केचन वक्तारो न भवन्ति, अथवा वक्तारोऽपि कृत्रिमताकरणाऽनभिज्ञत्वात्, कृत्रिमतायाः स्व स्वभावप्रतिकूलत्वाद्वा, कृत्रिमताश्रवणकुतूहलिन्या जनतायाः स्वभविष्यदुपेक्षारूपाऽपमानं विभाव्य तं विषयं तत्समक्षे नोपतिष्ठापयिषन्ति, अत एव तं विषयं ग्रन्थबद्धं चिकीर्षन्ति। अथवा केचित् स्वमरणेऽपि स्वनामाऽमरतायै तद्विषयकग्रन्थं जनतायै समर्प्पिपयिषन्ति। तादृशानां विद्वज्जनानां तादृशग्रन्थप्रकाशनार्थमुत्साहनमपि संस्कृतभाषाया राष्ट्रभाषात्वाऽर्थं सहायकम्। बहव ईदृङ्निर्धना विद्वांसो भवन्ति, ये तं स्वप्रणीतग्रन्थं स्वधनेन मुद्रापयितुं नाऽलम्भूष्णवः। केचित्तस्मायलम्भूष्णवोऽप्यग्रे तद्ग्रन्थस्याऽविक्रयभिया (गुणज्ञानां नैयून्यकारणात्) स्वगृहस्थितमूलकोपजिह्विकाजिह्वोपलीढतामूलकहानिभिया च तं स्वग्रन्थं स्वयं न प्रचिकाशयिषन्ति। तत्र संस्कृतजनताया अप्येतत् कर्त्तव्यं यत्— तादृशविद्वद्भ्यो धनादिप्रदानद्वारा तदुत्साहोपबृंहणं कुर्यात्। वस्तुतस्तु प्रधानसंस्कृतसाहित्यसम्मेलनेनैव इदं कार्य्यं सम्भालनीयम्। तद् जनतातः काले काले धनं सङ्गृह्य तादृशग्रन्थान् स्वाऽभिमुखतः प्रकाशयेत्। ततश्च तत् (सम्मेलनं) स्वनीयतपरोक्षाद्

विश्वविद्यालयान्तरपरीक्षासु वा तादृशयोग्यग्रन्थानां नियमनं कारयतु, येन तादृशानां लेखकानां धनमानमूलकोत्साहवृद्ध्या ग्रन्थानां तादृशलेखकानां च बंहिम्नि जाते सति स्वयमेव संस्कृत-भाषा पिपीलिकागति न्यायेन राष्ट्रभाषात्वमासीदेद्। एतद्विषये औदासीन्येनैव संस्कृतं राष्ट्रभाषात्वात् पतितम्, नाऽत्र मृषोद्यम्। यस्या भाषाया भाषिका जनता यदि स्वविदुषां गुणज्ञा न, तेषामुत्साहिका न, तेषां च सम्मानयित्री न, तस्या भाषा विदुषां संख्या क्रमशो ऽल्पीभवन्ती भाषामपि राष्ट्राद् बहिष्करोति। भूयांस उत्साहिनो लेखका एतद्विषये ऽग्रे स्वाऽसौविध्यबाहुल्यं दृष्ट्वा 'हृदयेष्वेव लीयन्ते निर्द्धनानां मनोरथाः;...... विधवास्त्री कुचाविव' इति न्यायात् तद्भाषाभाषकजनतायां गुणज्ञान् अनुपलभमानास्तस्या भाषाया जुगुप्समाना जीविकाप्रदातृभाषान्तरमुखानि द्रष्टुं तत्र च प्रवेष्टुमुद्यच्छमानाः स्वभाषाया अधः पतनकारणानि भवन्ति। अत एवैतस्मिन्नावश्यकविषये संस्कृतविदुषां तथा तत्प्रतिनिधिभूत-प्रधानसम्मेलनस्या ऽवश्यं प्रणिधानमपेक्ष्यते। ममाऽत्र आशैव न, प्रत्युत दृढविश्वासो यद् एतादृक्षाणां लेखकानां धनादिसाहाय्येन वा, ग्रन्थक्रयणसाहाय्येन वा, पुरस्कार-प्रदानादिना वा उत्साहने सति संस्कृतभाषा सपदि राष्ट्रभाषात्वसिंहासनमलङ्कुर्यात्।

अन्ततः पाठकाः सूच्यन्ते यत्—संस्कृतस्य राष्ट्रभाषात्व सिद्धान्तः 'संस्कृतम्' सम्पादकस्य मस्तिष्कत उत्पन्नो ऽङ्कुरः, वयमेतस्मै कथं प्रयतामहे, इति न कदापि मन्तव्यम्। यतो ना ऽयं वैयक्तिकसिद्धान्तः, किन्तु सार्व्वजनीनोऽयम्। अत एव सर्व्वैरेव संस्कृतपत्रेषु स्वशीर्षकेषु मुख्य उद्देशोऽयमेव स्थापनीयो येन वर्त्तमानाया भाविजनतायाश्च इत एव प्रणिधानं तिष्ठेद्। उद्देशे समक्षे सति तत्र प्रयतितारः, तदर्थं बलिप्रदातारश्च

भूयिष्ठा॰ प्राप्यन्ते। केवलं तदर्थमुत्तेजनाया उत्साहनस्य, प्रेरणायाः क्षेत्रनिर्म्माणस्य च प्रयोजनीयता भवति। 'संस्कृत' सम्पादकेनैतद् बीजं प्राक् श्रीमद्धृदयक्षेत्रेषूप्तम्। अधुना तेष्वङ्कुरोद्गमो ऽपेक्ष्यते, तत्रोद्यमरूपं जलमपेक्ष्यते। आशासे भवतां हृदयमूषरभूमिर्न सेत्स्यति। श्रीमन्तश्चा ऽग्ये जनताहृदि तद्-बीजवापं कुर्य्युः। एवं सति सर्वा भूमि॰ क्रमशो बीजिता, पत्रिता, पुष्पिता, फलिता च भवेत्। फलप्राप्तौ च जातायामस्मत्परिश्रमस्य सार्थक्यम्, उदरपूर्त्तिर्धनलाभ इत्यादि सर्व्वं भवेद्। एवं जाते सत्यस्मद्भारतभूमिस्सदा ऽस्मच्चक्षुषोरासेचनकभूता सती प्राक्तनसमयं पुनरस्मत्प्रत्यक्षीकुर्वती सती तज्जजनताया महोपकारप्रसूः सिध्येद्। आशासे—मदीयायामस्यां विचारधारायां पाठकाः सहयोगिनः स्युरित्युक्त्वा ऽग्रे विस्तरभिया विरम्यते ॥ शम् ॥

## सुरभारती

ले०—महाकवि भट्ट श्रीमथुरानाथ शास्त्री, जयपुरम्।

इह सकलभाषा जन्मदा का? भास्वती सुरभारती
वद? वेदजननी का? जगत्योजस्वती सुरभारती।
अनुपमसरससाहित्यधनिका का सती सुरभारती
वद भारतानुगता भवेत्का भारती सुरभारती ॥

# संस्कृतभाषायां निबद्धाः शिलादिलेखा मुद्रालेखाश्च

(लेखकः-सर्वतन्त्र स्वतन्त्रः स्वामिश्रीभगवदाचार्यः बडौदा)

मा

नवीयपाठकमहोदयानां स्यादेवाश्चर्यमिमं लेखं लेखस्य चास्य शीर्षकमुभयोरसम्बद्धतां चावलोक्य । स्यादेवात्रापेक्षितं शिला-मुद्रालेखप्रकाशनम् । नैव क्रियते मया तत् । मया तु शिला-लेखैर्मुद्रालेखैश्च कियांल्लाभः संस्कृतसाहित्यस्येत्येवात्रप्रदर्श्यते ।

शिलालेखैर्भारतीयसंस्कृतेः प्राचीनं स्वरूपं सर्वथाऽज्ञातं भवति । अस्माभिः संस्कृतपण्डितैः प्रायेणेदमेवाभिमन्यते यत्किञ्चिदस्ति तत्सर्वं सनातनमेव । तदीश्वरदत्तमेव तदनतिक्रमणीयमेव प्रचलितेषु केष्वपि वस्तुषु, आचारेषु, व्यवहारेषु, ग्रन्थेषु, मर्यादासु च नास्ति कथमपि कुत्रापि परिवर्तनस्य वर्धनस्य चावकाशः । पूर्वं मया कस्यचित्संस्कृतविदुष एको लेखोऽपाठि । वर्तमानहिन्दीलिपेः कथमपि परिवर्तनं न भवितुमर्हति यतस्तस्यां लिप्यां वेदादिग्रन्था लिखिता मुद्रिताश्च सन्ति । लिपिपरिवर्तनेन धर्महानिर्भवतीत्यादि तस्य तात्पर्यमासीत् । एतेन मम महदाश्चर्यं जातम् । प्रायेण प्राचीनपण्डितानां मते उत्तरभारते प्रचलिता लिपिरेव वेदलिपिर्धर्मलिपिर्वा । ततश्च तत्परिवर्तनेन स्यादेव धर्मबाधेति तेषामाशयः ।

वैयाकरणैः पाणिनीयैः स्वीक्रियतेऽष्टाध्याय्याश्चतुर्दश सूत्राणि श्रुतिरूपाण्येव। एवं क्रमेणैव क्वचिद्धेतोः श्रुतय आसन्पूर्वम्, इदानीं च विनष्टाः। पाणिनिना तत्र केवलमनुबन्धानां णादीनां नियोजनं कृतमिति। यथाऽयं सिद्धान्तः सर्वथा भ्रामकोऽप्रामाणिकश्च तथैवायमपि सिद्धान्तस्तथाविधो लिपिहानेर्धर्महानिर्भवतीति। यथा पाणितीयैर्मन्यसे "अथ शब्दानुशासनम्" इति सूत्रं महाभाष्यकारीयं वाक्यं तथैवायमपि मुधाभिमानो लिपिरियमीश्वरलिपिरिति। पूर्वोक्तं सूत्रन्तु पाणिनेरेव। शब्दानुशासनं न पतञ्जलिनोपक्रयते। उपक्रान्तं च तद्भगवता पाणिनिना। पाणिनीयमेव तत्सूत्रम्। सूत्राण्युद्धृत्यैव व्याख्यानपरिपाटी भाष्यकाराणाम्। तेनैव परिपाटीमाहात्म्येन 'अथशब्दानुशासनम्' इति भाष्यारम्भे ऽवलोकितं भवति। भ्रान्त्यैव तत्सूत्रस्य स्थानभ्रष्टता। अथेत्युच्चार्यादौ ग्रन्थप्रणेतॄणां ग्रन्थप्रणयनपरिपाटी पूर्वमासीदिति सर्वैरेव मन्यते। क्वचिदस्याः पद्धतेर्विपरिलोपोऽपि [illegible]। तथापि प्रायेण तथैव इदं तु न वक्तुं शक्यम्। यदि "अथ शब्दानुशासनम्" पाणिनेरेव स्यात् तर्हि भाष्यकारै "वृद्धिरादैच्" इति सूत्रस्थस्य वृद्धिशब्दस्य माङ्गलिकत्वं न प्रतिपाद्येतेति। तत एव ग्रन्थादित्वं चापि न समर्थ्येतेति च। इदमत्र रहस्येयम्, अथ शब्दानुशासनमित्यत्र पठिताथशब्दस्य माङ्गलिकत्वप्रख्याने तु नैव भाष्यकाराणामाशयः। केवलं वृद्धिशब्दस्य माङ्गलिकत्वं तेन समर्थ्यते। तस्यायमाशयः अथेतियुक्तं सूत्रं प्राथमिकं मङ्गलाचरणरूपं प्रतिज्ञावाक्यरूपञ्च। ततः परं शब्दानुशासनेन भाष्यम्। तथैव "अ इ उ ण्" इत्यादिचतुर्दशानां सूत्राणामवतरणं जातम्। एवं चादौ मङ्गलं विधाय प्रतिज्ञां च कृत्वा ग्रन्थादावपेक्षितानां वर्णानां वर्णक्रमाणां च साकल्येन पाठं कृत्वा भाषानियमविधानार्थी सूत्रारम्भः क्रियते। अयमप्यारम्भ आरम्भ एवेति। अत एव ग्रन्थादौ ग्रन्थान्ते

चेत्यादि भाष्यकारवचनं नातीवक्षमावहमिति । एवमेव भ्रान्त्यैवायं कोलाहलो लिपिज्ञानैर्धर्मज्ञानिरिति । एतेन लेखेन स्यादेवैतद्विषयकसर्वभ्रमनिवारणमित्याशया ऽयं प्रयासः ।

राज्यस्य धर्मस्य च मर्यादा नहि सर्वदैकरूपेणावतिष्ठन्ते । राज्यप्रवर्तनकाले राज्ञां स्वाभाविको ऽयं भ्रमः प्रवर्तते ऽस्मदीयेऽयमविनाशिनी शक्तिरिति । एवं धर्मरहस्यमविदामपि भ्रम एव यदस्मत्समये प्रवर्तमानो धर्म एवास्मत्पूर्वजानामपि समये साकल्येनासीदिति । नाल्पमप्यत्र परिवर्तनं जातम् । अथवा इयमेवास्मत्कालीना धर्ममर्यादा भविष्यत्यपि काले वर्त्स्यतीति च । नियमस्त्वेतादृशः— अधिकशक्तिशालि राज्यमल्पशक्तिशालि राज्यं निरवशेषमश्नाति । भविष्यति काले आगमिष्यन्त्यावश्यकता अतीतकालेषु संजातानामावश्यकतानां स्वविरोधितया समूलं नाशयन्ति । नवपरिवर्तितदशायामपि वर्तमाना धार्मिका विद्वांसो विचारवैधुर्येणेदमेव सनातनमिति मत्वा परिवर्तनवादं विरुन्धन्ति । विश्वपतिसाम्राज्येऽनादिकालतः प्रवर्तमानस्य परिवर्तनं नाम परमसम्राजो नियमः । स च जिहासितानामपि बहूनां बहुभिरपि प्रयासैर्न शक्यो विच्छेत्तुम् । बहवो राजानो वसुन्धरायामुदयं प्राप्यास्तं गताः । अनेके चोदेष्यन्ति । इदं परिवर्तनक्रममवश्यम्भाविनं जानाना राजानः स्वप्रजाकल्याणनिर्माणार्थं वंशपरम्परया राज्यपरिपाट्याश्च चिरकालं महत्याकाशमण्डले मधुरस्मृतिस्थापनार्थमनेकान् योग्यानुपयोगिनश्चोपायान् सम्पादितवन्तः । आधुनिकैरपि भूपतिभिरेवमेव क्रियते । भारतीयैर्नरेन्द्रैर्बहव उपायाः परिगृहीताः । तेषु प्रशस्तयः, आज्ञापत्रिकाः, असंश्लिष्टगद्यपद्यलेखाश्च मूर्तिषु, स्तुपेषु, स्तम्भेषु, मुद्रासु चाद्याप्यस्माभिरुपलभ्यन्ते । एतत् सर्वं भारतीयानां पैतृकधनमेव ।

अनेकैः परिवर्तनैः संयोगैश्चाधोगतो भूभागः। भूपृष्ठे वर्तमानः प्रकाशो मर्यादाः पूर्वजस्मृतिसाधनानि सर्वाण्येव वस्तूनि भगवत्या भारतवसुन्धराया गर्भे निलीनानि। विस्मृतमेवास्माभिरेतत् अस्माकं पूर्वजानां कीर्तिकलाकलाधरशकलान्यविकलान्येव भूमेरुदरमधिवसन्ति। अनेनाज्ञानेन बहुविधा भ्रान्तीर्वयं पोषयितुं विवशीकृताः।

बहोः कालादारभ्यायं विवाद उपक्रान्तः। भारतवर्षे लेखनप्रथा प्राचीनाऽऽधुनिकी वा। विवादेऽस्मिन् माध्यस्थ्यमनुगृहीतुं न किमपि प्रमाणं सामर्थ्यमनुसंधत्ते स्म। नहि केवलमस्माकं भारतीयानां वाग्धारैव वेदयितुं समर्था ऽस्ति। प्रमाणसापेक्षायां विदुषां हृदयतोषायास्मत्सविधे नासीत किमपि सत्यमपि सत्यापयितुम्। नास्म वयं समर्थाः। अन्यकलानामिव लेखनकलाया अपि परमगुरुर्भारतं वर्षमिति स्थापयितुं सर्वथैवास्माकमसामर्थ्यमिवासीत्। उपलब्धमन्यत्प्रमाणमल्प प्रायमासीत्।

शनैर्यस्य कस्यापि प्रयत्नेन भारतभूमिरुत्खाता। उत्खातयो च तया भारतभूम्या आशातीतान्यनेकानि महारत्नान्यस्मभ्यमुपहृतानि। मृत्तिकानिचयविमर्दितः सर्व एव प्रकाशः पुनरपि भारतं प्रकाशयामास। हन्त! उपधृतानामपि रत्नानां परिचायकः कोऽपि नासीत्। अनेके हि शिलालेखा भूगर्भाद् वहिर्निःसृताः परन्तु नासीत् कश्चिदपि तेषां वाचयिता। भारतीया विद्वांसः खिस्तात् १४ शताब्याः पूर्वमेव भारते प्रचलिताया ब्राह्मीलिपेस्तस्याश्च पूर्वमेव भारते प्रसूतानां कालक्रमेण खिस्तस्य ६ शताब्या यावत् अन्यासां बह्वीनां लिपीनां परिचयं वाचनं च विस्मृतवन्तः। खिस्तस्य सप्तम्यां शताब्यां या लिपयस्तैस्तैर्विद्भिराविष्कृतास्तासामपि पठनस्य वाचनस्य च विरलप्रचार

आसीत्। खिस्तस्य १३५६ शताब्द्यां दिल्लीपत्तनस्य सुल्तान-फीरोजशाहतुगलकेन महता परिश्रमेण टोपराख्यात् स्थानात् मेरठतश्च सम्राडाशोकलेखाङ्किनौ द्वौ विशालौ स्तम्भावानायितौ दिल्लीम्। तल्लेखाशयमवगन्तुं तेन, ततश्च परं बादशाह—अकबरेणापि कृते ऽपि महति परिश्रमेण साफल्यं नोपलब्धम्।

सर विलिम जान्समहोदयस्य प्रेरणया एशियाखण्डस्य प्राचीनशिलालेख—ताम्रपत्र— मुद्रेतिहास-भूगोल-भिन्नभिन्नशास्त्र व्यवहारपद्धतिप्रणालिका—शिल्पादि गवेषणार्थं १७८४ तमे सम्वत्सरे खिस्तीयजनवरीमासस्य १५ तिथौ कलिकातामहानगर्य्याम् — एशियाटिक— सोसायटीति नाम्नी एका समितिः स्थापिता बभूव। १७८५ तमे यीशवीयसम्वत्सरे महाशय चार्ल्सविल्सनेन वङ्गानां नरपतेर्नाराय-णपालस्य शासनकालिकः कश्चन स्तम्भलेखो दीनाजपुरमण्ड-लान्तर्गत वदालाख्ये स्थाने समुपलब्धः समधिगतार्थोऽभवत्। तस्मिन्नेव वर्षे पण्डितराधाकान्तशर्मणा टोपरा—स्थाने समुपलब्ध-स्याशोकस्तम्भस्य तदानीं च दिल्लीस्थस्य त्रयो लेखाः पठिताः। टपरास्तम्भस्था लेखा नातीवप्राचीना आसंस्तेनाल्पायासेनैव तेऽधिगतार्था अभवन्। तस्मिन्नेव वर्षे जे० एच० हरिंगटन-महा-शयेन उपयुद्धगयं नागर्जुन—बराबर-गुहासु मौखरीवंशीयस्य राज्ञोऽनन्तवर्मणस्त्रयो लेखाः सम्प्राप्ताः। एतेषां लिपिर्गुप्तकालि-कलिपिमनुहरति स्म। अतस्तेषां वाचनं काठिन्यमुपगतम्। परं मुत्साहसम्पन्नेन चार्ल्सविल्किन्सेन षड्वर्षाणि सततं प्रयस्य ते सर्वेऽपि लेखाः पठिताः। परिणामतश्च गुप्तलिपेर्वर्णमालाया अर्धो भागः प्रायेणाधिगतोऽभवत्। सप्तमाद् यीशवीय-सम्वत्स-राद्वारभ्य १५ वर्षपर्यन्तं ये च लेखा लिखता आसंस्ते सर्वेऽपि

कर्नलजेम्सटाडमहाशयप्रार्थितेन केनचिद् ज्ञानचन्द्रयतिना पठिताः। एतेषां लेखानामयं पाठो वाचनं वा १८२३ तमे यीशवीयसम्वत्सरे तदूनन्तरेषु च कालेष्वभवत्। यीशवीयसम्वत्सरे १८२८ तमे बी० जी० वर्बिग्टनमहोदयेन कतिपये संस्कृतलेखास्तैमिललेखाश्च पठिता वर्णमालाश्च सज्जीकृताः। वाल्टर इलियटमहाशयेन प्राचीनानि कैनडी—अक्षराणि परिचीय यीशवीय १८१३ वत्सरे वर्णमाला कैनडीया योजिता। यीशवीये १८३४ वत्सरे कैप्टन-ट्रायरेण प्रयागस्याशोकस्तम्भस्य कतिपयेंऽशाः पठिताः। एते च लेखा गुप्तवंशीयस्य समुद्रगुप्तस्यासन्। तल्लेखावशिष्टांशाश्च डा० मिल्—महोदयेन तस्मिन्नेवाब्दे ऽपठिषत। एताभ्यां द्वाभ्यां विद्वद्भ्यां संभूय वाचितेषु च तेषु लेखेषु मिटारीस्थस्य स्तम्भस्य स्कन्दगुप्तराजस्य लेखा अपि यीशवीय १८३७ सम्वत्सरे सुपठा अभवन्। अयं च प्राचीनलिपीनामध्ययन-क्रमो ऽनया रीत्या प्रारब्धश्चिरं प्रवर्तमान आसीत्।

मौर्यवंशीयस्य राज्ञो ऽशोकस्य लेखेभ्यः खिस्तात् पूर्वस्याश्चतुर्थशताब्द्या आरभ्य तृतीयशतकपर्यन्तेषु कालेषु प्रचलितेभ्यो मुद्रादिभ्यश्च तदानीमस्मिंदेशे द्वयोर्लिप्योः समवस्थानं प्रचारश्चावगम्यते। एका च वामभागतो दक्षिणभागं गच्छति स्म। अपरा च दक्षिणभागतो वामभागं गच्छति स्म उर्दूवत्। प्रथमा लिपिर्ब्राह्मी नाम, अपरा च खरोष्ठी। संस्कृत—साहित्ये ऽमरकोशादिषु ब्राह्मी तु भारती भाषेत्यादिना ब्राह्म्याः सरस्वत्याः पर्यायवाचकत्वं दृश्यते। तत्रापीदमेव मूलं स्यात्, ब्रह्मणा निर्मिता ऽत एव नाम्ना ब्राह्मी संजाता। ब्राह्मीं लिपिं दृष्ट्वा भाषाया अपि नाम ब्राह्मीति जातम्, परम—प्राचीनेषु ग्रन्थेषु ब्राह्मणादिषु भाषापर्यायवाचकत्वेन

ब्राह्मी—शब्दप्रयोगो न दृश्यते।

जैनानां बौद्धानां च ग्रन्थेषु बहूनि लिपिनामान्युपलभ्यन्ते। यद्यपि तासां लिपिनां शिलालेखतो न भवति कश्चिदत्र सम्बन्धस्तथापि लिपिविचारावसरे केवलमन्यासां लिपीनां नामावबोधनं न स्यादस्थाने इति विदुषां—मोदाय तथा क्रियते।

जैनसूत्र—ग्रन्थेषु अष्टादश लिपयो वर्णिताः। तथाहि—बंभी, जवणालिः, दोसापुरिया, खरोट्ठी, पुक्खरसारिया भोगवइया, महाराइया, उपअन्तरिक्खिया, अक्खर—पिट्ठिया, तेवयइया, गिरहइया, अङ्कलिविः, गणितलिविः गन्धव्वलिविः, आदंसलिविः, माहेसरी, दामिली, पौलिन्दीचेति।

बौद्धानां ललितविस्तारग्रन्थे चतुष्षष्ठेर्लिपीनां नामानि दृश्यन्ते। पण्डितमान्यस्य ओझास्पदस्य पण्डित-श्रीगौरी-शङ्करस्य मतेन एतेषु बहूनि नामानि कपोलकल्पितान्येव तानि सर्वाणि नामानीमानि—ब्राह्मी, खरोष्ठी, पुष्करसारी, अङ्गलिपिः, वङ्गलिपिः, मगधलिपिः, माङ्गल्यलिपिः, मनुष्यलिपिः अङ्गुलीयलिपिः, शकारिलिपिः, ब्रह्मवल्लीलिपिः, द्राविड–लिपि, कनारिलिपिः, दाक्षिणलिपिः उग्रलिपिः, संख्यालिपिः, अनुलोम लिपिः- उद्ध्वंधनु लिपिः, दरदलिपिः, खास्यलिपिः, चीनलिपिः, हूणलिपिः, मध्याक्षरविस्तर लिपिः, पुस्पलिपिः, देवलिपिः, नागलिपिः, यक्षलिपिः, गन्धर्वलिपिः, किन्नरलिपिः, महोरग-लिपिः, असुर लिपिः, गरुडलिपिः, मृगचक्र लिपिः, चक्रलिपिः वायुमरलिपिः, भौमदेवलिपिः, अन्तरिक्ष देवलिपिः- उत्तरकुरुद्वीपलिपिः, अपर गौडादिलिपि, पूर्वविदेहलिपिः, उत्क्षेपलिपिः, निक्षेपलिपिः, विक्षेपलिपिः, प्रक्षेपलिपिः, सागरलिपिः, वज्रलिपिः लेखप्रतिलेखलिपिः, अनुद्रुतलिपिः, शास्त्रावर्तलिपिः, गणावर्त लिपिः, उत्क्षेपावर्तलिपिः,

विक्षेपावर्तलिपिः, पादलिखितलिपिः। द्विरुत्तर-पदसन्धिलिखितलिपिः, दशोत्तरपदसन्धिलिखितलिपिः, अध्याहारिणीलिपिः। सर्वसत्संग्रहणीलिपिः, विद्यानुलोमलिपिः। विमिश्रितलिपिः, ऋषितपस्तप्ता लिपिः, धरणीप्रेक्षणीलिपिः, सर्वौषधनिष्यन्दलिपिः, सर्वसारसंग्रहलिपिः, सर्वभूतसंग्रहणी लिपिश्चेति।

६६८ तमे वत्सरे चीने फायुअन् चुलिन् इत्याख्यः कश्चन बौधो विश्वकोशो निर्मितो ऽभवत्। तत्रेयं कथा—लेखनकलाया उपक्रमास्त्रिभिर्दिव्यशक्तिसम्पन्नैराचार्यैः कृतः। तेषु ब्रह्मा ब्राह्म्या लिपेः कर्ता खरोष्ठः खरोष्ठ्याः। त्रितीयश्च कश्चन चीनदेशीयः त्सङ्की नाम। ब्रह्मखरोष्ठाभ्यां ब्राह्मी खरोष्ठी च लिपिर्देवलोकादवाप्ते। त्सङ्की च पतङ्यादीनां पदचिह्नैः स्वकीयां लिपिं निर्मितवान्। इयं च लिपिरुपरिदेशाधो ऽवतरति। तथैव पठिताऽपि च भवति। यूरोपीय-विद्वद्भिः ब्राह्म्या लिपेः, पाली, इण्डियन् पाली, साउथ अशोकः, लाटश्चेति बहूनि नामानि दत्तानि।

इदं त्ववगतं ब्राह्मी लिपिरस्य देशस्य प्राचीनतमा लिपिः। अस्य सिद्धान्तस्य पुष्टिःयीशवियसम्वत्सरात्पूर्वस्यास्त्रितीयशताब्द्याः प्राप्तेभ्यो लेखेभ्यो ऽतिरिक्ता लेखा यीशवीयसम्वत्सरात्पञ्चम्यां शताब्द्यां लिखिताः। पिप्रावास्तुपाद्भट्टिप्रोमाभ्यामधिगताः। एतेनातिव सौकार्येणेदं समाधितं भवति सार्धद्वयसहस्रवर्षेभ्यो ऽपि प्रागासीदेव लेखनकला ऽऽविर्भूतेति। अत्रेदमप्यवधेयम्—नहि तेषां लेखानां लेखनसमय एव लिपिसंयोजना कृताऽभवदिति को ऽपि विचारवान् विद्वाननुमन्येत। शतेभ्यो ऽपि वर्षेभ्यो महता प्रयत्नेन क्रमशः सम्पादिता लिपिर्लेखनकाल उपयुक्ता भवतीति युक्तं वचनम्। नहि लेखनदिवस एव लेखनकला परिपूर्णतया ऽविस्कृताऽभवदिति सर्वेषां विदुषामनुभवनं चैकम

त्यमत्र। एवं च वर्षात् सहस्रद्वयादप्यूर्ध्वं लेखनकला प्राप्तप्रसारा ऽभूदित्यत्र न संदेहावकाशः।

अस्यां ब्राह्म्यां लिप्यां तानि सर्वाण्यप्यक्षराणि कल्पितान्यासन्—यानीदानीं पाणिनीयव्याकरणे स्वी क्रियन्ते। ॐ कागे जिह्वामूलीयोपध्मानीयौ। यमाश्चाप्यासन्। इदानींतनैः पाणिनीयैः केवलं जिह्वामूलीयाक्षरस्य चिह्नं परिवर्तितम्। एवं च जिह्वामूलीयोपाध्मानीययोश्चिह्ने न को ऽपि विशेष उपलभ्यते। कखपफनां पूर्ववर्तित्वेनैव परिचेयो ऽयं जिह्वामूलीयो ऽयमुपध्मानीय इति। मन्ये सौकार्यार्थमेवैतत्परिवर्तनम् सम्पादितं भवेत् पश्चात्तनैर्विद्वद्भिः परिवर्तनप्रणयिभिः। अन्येषु कतिपयेषु व्याकरणग्रन्थेषु इदानीमपि जिह्वामूलीयस्य वज्राकृतिरेव दृश्यते। इदमेव वोपदेवादिभिरपि स्वीकृतम्। गौतमेष्वपि लेखेषु भवतीदमेवोपलब्धम् चिह्नमिति।

प्रतिपादयति च बूलरमहाशयः खिस्तस्य दशम्यां शताब्द्यां भारते लिपिप्रवेशम्। यद्यप्येतेन ब्राह्म्याः प्राचीनत्वं प्रतिपादितं भवति परं तु तस्यास्य कथनस्येदं तात्पर्यम्—खिस्तीयानां पवित्रे ग्रन्थे वाइविले नूहपुत्रस्य शोमस्य प्रसूतानां सन्ततीनाम्, इथियोपिक्, अरमइक्, सीरियक्, फिनिशियन्। हिब्रू, इत्यादयो भाषालिपयश्च पश्चिमभागीयैसिया प्रदेशस्य अफ्रिकाप्रदेशस्य च सर्वसंमताः। इमा एव सेमिरिकलिपयः सेमिरिकभाषाश्चेत्यप्युच्यते। ब्राह्मीलिपिः सेमरिकलिपितः प्रादुर्भूता। एवं ब्राह्मी लिपितः पूर्वमपि सेमरिक लिपय आसन्निति प्रतिपादनाभिलषेण प्रवृत्तस्य महाशयबूलरस्य तात्पर्यं नूहादीनां प्रचीनत्वप्रति-पादने तत्संततीनां च गौरव सम्वर्धने पर्यवस्यतीति बहूनां मतम्।

मैक्समूलर-बूलर-प्रभृतीनां विदुषां मते खिस्तात्पूर्वस्यां चतुर्थ्यां शताब्द्यां पाणिनिरासीत्। पाणिनीयव्याकरणस्याद्वितीयो ज्ञाता पाश्चात्यो गोल्डस्टकरः पाणिनीं बुद्धाद् भगवतः पूर्वकालीनं मन्यते। ओझास्पद पं० श्रीगौरीशङ्करमहाशयः पाणिनेस्त्रिभ्यः पुरुषेभ्यः परं जातेन व्याडिना पाणिनिसूत्रेषु संग्रहनामकं व्याख्यानमकारि इति। महाभाष्यकारस्य पतञ्जलेः कालस्तु खिस्तात्पूर्वं द्वितीयस्यां शताब्द्यां निश्चित एवेति च प्रतिपादयति।

दिवाविभानिशा० इत्यस्मिन् सूत्रे पाणिनिर्लिपिलिलिविशब्दांवुच्चारयति। इन्द्रवरुणभव इत्यस्मिन् सूत्रे यवनानीशब्दमवतारयति। पश्चाज्जातेन व्याडिना कात्यायनेन लिपिवोधकत्वेनैव यवनानी शब्दप्रवृत्तिः स्वीकृता। पाणिनि यपठितेषु धातुपाठेषु "लिख" धातुरप लभ्यते। "अधिकृत्य कृते ग्रन्थे" इति सूत्रे पतितो ग्रन्थशब्दः सूचयति पाणिनिसमये ग्रन्था आसन्निति। शिशुक्रन्दयमसभ० इति सूत्रे तु शिशुक्रन्दादयश्शब्दास्ततो ऽभिनिष्पन्नाः शिशुक्रन्दीय-यमसभीयाग्निकाश्यपीयेन्द्रजनीयादिशब्दाश्च तत्कालीनानामेतेषां ग्रन्थानां सत्तामवतारयन्ति। स्वरितेनाधिकार इत्यस्मिन्सूत्रे न स्वरितश्चास्यवाचकः, स्वरितशब्दः प्रत्युत वर्णेषु संयोज्यश्चिह्नविशेषः। नहि वाङ्मात्रेणोच्चारितेषु शब्देषु चिह्नस्थापनं भवितुमर्हति। अवश्यमेवतदानीमपि वर्णानां कल्पनाकार्यं सम्पन्नमेवासीदिति कल्पनीयम्। उपदेशेऽजनुनासिक इदिति सूत्रेण छ्योग्यस्वरेषु अनुनासिकचिह्नप्रतिपादनमवगम्यते। इदमपि तथैव प्रतिपादयति। "पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः" इत्यत्र सूत्रं भिक्षुसूत्रनटसूत्रयोः सत्ता तदानीमपि प्रतिपादयति। इदंतु सर्वेषां विदिमस्ति यत्पाणिनिर्बहूनां पूर्ववर्तीयानां वैयाकरणानां नामानि स्वाष्टाध्याय्यां स्मरति। यथा—लोपः शाकल्यस्य, लङः शाकटायनस्यैव, ओतो

गार्ग्येत्यादि । यद्येतेषामाचार्याणां व्याकरणानि ग्रन्थतो निबद्धानि नाऽऽसंस्तर्हि कथं पाणिनिः सर्वेषां विरोधं वैमत्यं चाकरोत्। सर्वाण्येव व्याकरणशास्त्राणि तेन कण्ठस्थीकृतान्यासन् इति कथनं तु श्रद्धामात्रैकजीविनां प्रत्ययम् । अतोऽवश्यमेवास्थेयं पूर्वं ग्रन्था लिखिता आसन् तानवलोक्यैव पाणिनिः स्वसूत्रेषु स्वविरोधिनां नामानि स्मरति स्म ।

इयं वर्णमाला वर्तमाना प्रचलिता चोत्तरायते-कदा प्रवृत्तेति निर्णयः काठिन्यं विवादंचानुधावति । परं तु शक्यते वक्तुमेतावत् । नेयमनादिरिति । ये च बालवृद्धयो वर्तमानहिन्द्यक्षरपरिवर्तनस्य नाममात्रेणापि रोषं प्रदर्शयन्ति, सनातनवैदिकपद्धतेश्च तथा करणेन नाशं मन्यन्ते ते तु लालनीयाः । तेषां मते उत्तरायते-प्रचलितानि-हिन्द्यक्षराणि अथवा संस्कृताक्षराणि सृष्टेरारम्भत एवावतीर्णानि स्वर्गतो मोक्षधामतो वा । इदमपि मन्यमाना लोका दृश्यन्ते-स्वर्गादवतीर्णै रेवाक्षरैर्वेदा लिखिता आसन् । यद्येषां परिवर्तनं स्यात्स्वर्गीयमेव वस्तु परिवर्तितं भवेत् । तेन महाननर्थः कोऽपि संभवेदिति । परन्तु तुच्छोऽयं विचारः । ये चाद्यावधि प्राचीना लेखाः सम्प्राप्ता ये च ब्राह्म्यालिपेः साक्षात्परम्परया वा कृपापात्रतां दधते तान् ( लेखान् ) तदानीं प्रचलितां हिन्दीवर्णमालाम् उत्तरभारतीयसंस्कृतवर्णमालां वाऽवलोक्य चकित-चकितैर्न कैश्चिद्विद्भिरपि झटिति वक्तुं शक्यते । ब्राह्म्या लिपेरिमाः सन्ततय इति । पण्डित गौरीशङ्करमहाशयेन प्रकाशितानां प्राचीनाक्षराणां दर्शनेन केवलमिदमेव वक्तुं शक्यते तदानीन्तनानां लोकानां नासीदुदरचिन्ता नासीदन्यो वा व्यापारः । अत एव निश्चिन्तेन मनसा स्वस्थयाऽत्र बुद्ध्या वृक्षपर्वतादिरूपेणाक्षराणां निर्माणे व्यापृता आसन् । निर्व्यापाराणामेव स व्यपार आसीत् । पश्चाद्यदा समयस्य बहुमूल्यतावगता भूता कार्येषु वृद्धिरभवत् तदा क्रमशः परिवर्तनम-

क्षररचनायामवरुद्धम् । यदि प्राचीनैरपि ब्राह्म्यां लिप्यां परिवर्तनं कृतं तर्हि कथंनाद्यापि यदि आवश्यकता परिवर्तनं कर्तव्यम्? । ये वान्धवाऽत्र कुपितकुपिता दृश्यन्ते तैश्शान्तिमाश्रित्य विचारः कर्तव्यः प्रयोजनं विदितं भविष्यति । यन्मते यत् पूर्वमभवत्तत्सर्वं सनातनधर्म एवेति पूर्ववृत्तहाने सनातनधर्मप्रहाणमिति च कल्पनं बाललीलेति ।

शिलालेखेभ्योऽन्यदप्येकं वस्तु विदितं भवति, प्राचीनैरङ्कसन्निवेशो—विचित्रयैव रित्या क्रियते स्म । एकां संख्यामारभ्य नव संख्यापर्यन्तम् ( १—९ ) प्रत्येकं संख्याया आधुनिकरित्या समान एव पृथक् पृथगङ्क आसीत । परं तु—१०, २०, ३०, ४०,५० ६०, ७०, ८०, ९० इत्येतासां संख्याबोधनाय भिन्नभिन्नानि चिह्नानि कल्पितान्यासन् । १००, १०००, शतसहस्र संख्याबोधनार्थमपि चिह्ने आस्ताम् । लक्षकोट्यर्वुदादिसंख्यानां बोधनार्थमपि तदानीं चिह्नैर्भाव्यम् । परं न तेषामद्यावधि अवगतिः सम्पन्ना । प्राप्तेषु दानपत्रेषु शिलालेखेषु च नेयती बृहती संख्याऽपेक्षिता स्यादिति न तैर्लक्षादीनां चिह्नावगतिः संजाता । ११ आरभ्य ९९ पर्यन्तानां संख्यानां लेखनावसरे पूर्वजानामयं क्रमः—११ = १०-१ । १५ = १०-५ । ३३ = ३०—३ । ९३ = ९०—३ । पश्चादयमपि क्रमः परिवर्तितः । नूतनश्च क्रमः संख्यावगमाय प्रकटितः एका दशगुणोत्तरा नाम्नी संख्या कल्पिता पूर्वजैः यथा—११११ । अत्रैकचतुष्टयं दृश्यते । अत्र प्रथमैकाङ्क एकत्वविशिष्टार्थबोधकः परं यदि दक्षिणतो वामभागं गम्यतां तर्हि द्वितीय एको दश संख्यावबोधकः एवं च ११११ संख्यां प्रकटयितुमिदं कर्तव्यम्—दक्षिणदिग्गतः प्रथम एक उपरिष्टात्स्थापनीयः ततः परं दश संख्यावगमको द्वितीय एको दशसंख्यया परिवर्त्य तस्यैकस्याधस्तात्क्रमेण स्थापनीयः । एवमेव तृतीय एकः शतसंख्यया परिवर्त्य पूर्वस्थापितस्य १० इत्य-

स्याधस्तात् वामभागादारभ्य दक्षिणभागक्रमेणैव स्थापनीयः। एवमेव चतुर्थ एकः सहस्रसंख्यया परिवर्त्य ततोऽधस्तात्स्थापनीयः। एवं चापेक्षितो १११९ इति संख्या निष्पन्ना भवति। तथा हि
१ + १० + १०० + १००० = १

इयमेव परिपाटी प्रायेणाद्यावधि प्रचलत्येवास्यास्तु।

शब्देभ्योऽक्षरेभ्यश्चापि संख्या सूचक-पद्धतिः पूर्वत एव प्रवृत्ता सिध्यति। तदानीमेक संख्याववोधनार्थं चन्द्रवाचका भूवाचकाः, रूप--पितामहनामक—तनु--इत्यादयः शब्दाश्च व्यवह्रियन्ते स्म। स्पर्श-वर्णेभ्यः क्रमेण एकतः आरभ्य पञ्चविंशतिपर्यन्तानां संख्यानामवगतिरासीत्। अर्थात्—क = १, ख = २, ग = ३, घ = ४, ङ = ५, च = ६, प = २१, म = २५, इत्यादि। यकारेण त्रिंशतः ( य = ३० ) रेफेण चत्वारिंशतः ( र = ४० ) लकारेण पञ्चाशतः ( ल = ५० ) वकारेणषष्टेः ( व = ६० ) शकारेण सप्ततेः ( श० = ७० ) षकारेणाशितेः ( ष = ८० ) सकारेण नवतेः ( स = ९० ) हकारेण च शतस्यावगतिरासीत्। एवम् अ इ उ इत्यादिस्वरैः क्रमेण, एक-शत--सहस्रादीनां दशगुणितानामवगतिः। पाणिनिना निपातितः पङ्क्तिशब्दोऽपि तथाविध एव।

अन्योऽपि शिलालेखेभ्यो लाभः। भिन्नकालीनानां भिन्न-भिन्नानां सम्वत्सराणामप्यवबोधो भवति। सप्तर्षिनामा सम्वत्सरो, लौकिकसम्वत्सरो वा, कलियुगसंवत्सरः, वीरनिर्वाण संम्वत्सरः बुद्धनिर्वाण-संवत्सरः, मौर्य संवत्सरः, सेल्युकिडि संवत्सरः, विक्रम ( मालव ) संवत्सरः, शक संवत्सरः, कलचुरि ( चेदित्रैकूटक ) संवत्सरः, गुप्त ( वलभी ) सम्वत्सरः गाङ्गेयसंवत्सरः, हर्ष-संवत्सरः, भाटिक-- ( भट्टिक ) सम्वत्सरः, कोल्लम ( कोलम्ब )—सम्वत्सरः, सिंहसम्वत्सरश्चैतेषां सम्वत्सराणां

परिचयः संपन्नः ।

एवमन्येऽपि लाभः शिलालेखादिभ्यो लब्धा आसन् । अस्मिन् । विषये बहुवक्तव्यमासीत् परन्तु समयाऽभावेन न किंचिदप्यधिकमुच्यते ।

## संस्कृतज्ञानां जीविकानिर्वाहाय कीदृशा उपाया अपेक्षिताः

"संस्कृतज्ञानां जीविकानिर्वाहाय कीदृशा उपाया अपेक्षिताः" इत्ययं प्रश्नोऽवश्यमेव सर्वेषामाश्चर्यजनकः । यदि स्युः केचन पङ्गवो वा निश्चक्षुषो वा अपाङ्गा वा शोभते तेषां कृतेऽयं प्रश्नः । परन्तु हस्तपादयुतानां हृष्टपुष्टाङ्गानामविकलसर्वेन्द्रियाणामहमेव नान्यो जगति इति मन्यमानानां संस्कृतविदुषां कृते समुत्थापितोऽयं प्रश्नो न केवलमाश्चर्यजनको हास्यास्पदमपि । अयमेव प्रश्न इदानीं संस्कृतभाषायाः स्फुटां दशां स्फुटमवबोधयति । परन्तु नाऽत्र भाषायाः कोऽपि दोषलेशः । कालस्यांग्रेज राज्यस्यैवात्रापराधः । ततः परं संस्कृत-विदुषां तु महानपराधोऽस्मिन् विषये । अङ्ग्रेजराज्यस्य तु समीहितमेवैतद्—ययाकयाऽपि रीत्या भारत-वर्षीयाअधो निपातनीयाः । यदि न स्यात्तेषामधः पातो न स्यादवस्थितिर्भारतवर्षे तद्राज्यस्य । भारत-शासनमन्तरेण तु इंग्लैंडस्यापि सैवावस्था सम्पद्येत या चेदानीं भारतवर्षस्यास्मदीयदेशस्य । राज्येन सर्व-शिक्षा-प्रणाली दूषितप्रायैवावस्थापिताऽस्मिन्देशे । ये हिन्दीं भाषां पठन्ति ये च प्रान्तीयां भाषामधि गच्छन्ति ये चाङ्ग्रेजीभाषामधीयते प्रायेण सर्वेषामेवावस्था संस्कृताध्यायिभिः सह सादृश्यमेव पुष्णाति अंग्रेजीपठनपाठनविषये नाध्यापयितारो दूष्याः । तद्यन्त्रपरिचालनं

नाध्यापकैः क्रियते । सर्वथैव तद्यन्त्रमन्याधीनम् । त एव राज्य-समीहिताः सर्व एव दोषा अङ्ग्रेजी-अध्यापनविषये स्वाभावतः समारूढाः । अध्येतृषु च सहजत एव सर्वा सर्वाण्येव समीहितानि नैर्वल्यानि समापतन्ति । हिन्दी-गुजराती-मराठी-बङ्गाली इत्यादि भाषायामध्यापनक्रमो न सर्वथाऽयोजायत्तः । तत्र तत्तद्विदुषामेवा-पराधः एवमेव संस्कृताध्यापनमपनांग्रेजायत्तम् अङ्ग्रेजैः पाठनक्रमः एतादृश एव व्यवस्थाप्यते येन छात्राणां शरीरे मानसे मस्तिष्के च नैष्कर्मण्यमेव वर्धेत अनुपयुक्ता बहवो विषया अध्याप्यन्ते परन्तु भारतीयोपयुक्त एकोऽपि विषयोऽध्यापनक्रमे नो सन्निवेशितः । भाषाभिः सहानिवार्यरूपेणाऽगच्छतः फेशनमहाशयस्य अनुकम्पया छात्राणां मनो दौर्बल्यं देहदौर्बल्यं चा निवार्य मेव । यदि किं चिद्धस्त-कौशलं छात्रेभ्यः शिक्षितं स्यादवश्यमेव तेषां समीहितं कल्याणं सिद्धिमथमभिधावेत् । परन्तु यदि राज्यस्यास्य हस्तकौशलं भार-तीयानामपेक्षितं समीहितं च स्यात् । किमपेक्ष्य निरपराधानां वराकाणामसामप्रान्तीयानां वस्त्रकलापारङ्गतानां बलात्कारेणाङ्गुष्ठच्छेदो विहितो भवेत् ? । शिक्षणक्रमे केवलं भाषाशिक्षणमेवावस्थापितं तत एवोपार्जिततच्छिक्षणानां निरुद्यवसायिता परां काष्ठामधि-रूढा । अन्यथा वस्त्रव्यवसायेन चर्मव्यवसायेन, लोहकार, सूत्रकार-स्वर्णकारादीनां व्यवसायेन वर्तमानानां केषामपि सेन्द्रियाणां निरि-न्द्रियाणां वा जीविकोपायान्वेषणं न सम्भवेत् । परिणामतः शिक्षितानां व्यवसायानुष्ठानशक्तिरेवापगता भवति । सर्वमेव जीवनबीजं निर्दग्धमेव भवति । नास्त्यस्मिन्राज्ये काप्येतादृशी व्यवस्था याम-नुसृत्य सर्वेषामेव बी० ए० एम० ए०, उपाधिधारिणां कस्मिन्नपि शिक्षाकार्ये नियोजनं स्यात् । तेषां मनसि व्यवसायविषये लज्जा निरूढा । कोऽपि पठित आपणे हट्टे वा स्थित्वा वाणिज्येनान्येन वा व्यवसम्पन्नेन जीविकोपार्जनाय नोत्सहते । लज्जैव तत्र कारणम्

स च कैङ्कर्यमेव नक्तंदिवमनुवर्तते। पराधीनता प्राणाधिकाऽपि तस्य प्रिया भवति। अंग्रेजमहाप्रभुकमलकोमलहस्त-प्रदत्तं प्रशंसापत्रमादाय स स्वमानं देशमानं च तृणाय मन्यते। एतदेव चाङ्ग्रेजराज्यस्य समीहितं नाम। कैकेयि! कामाः फलितास्तवेति।

भवतु प्रस्तुतं विचारयामः संस्कृतभाषा माधुर्येण सह काठिन्यमपि सेवत इति प्रायेण निर्विवादम्। गुलाबशाखासु सुगन्धिभिर्मनोरमैश्च पुष्पैः—सह कण्टकजातमपि जायत एव। परन्तु तत्पुष्परक्षार्थं तत्सौन्दर्यविवृद्ध्यर्थं चात्मसत्तामवधारयति। काठिन्यं च संस्कृतभाषायाः सर्वथा निरुपयोगि। यदि स्यादिदं यत्किञ्चिद्देशभाषा वा यत्-किञ्चित्प्रान्तभाषा काठिन्यं स्वरूपतो नोपलभ्येत। परन्तु तत्त्वं तु नास्ति। काठिन्यविवृद्ध्यर्था एव शेखराद्यो व्याकरणग्रन्थाः, सर्वे च नव्यन्याय-ग्रन्था मीमांसाग्रन्थाश्चेति यत्किञ्चिद्विषयप्रतिपादनावसरे भाषाकाठिन्यसम्पादनं पाण्डित्यपरिचायकमिति पण्डितैर्मन्यते। द्वादशभिर्वर्षैर्व्याकरणं श्रूयत इति वृद्धवचनम्। तदाऽपि केवलं तावता कालेन न तच्छ्रूयते। तदधिगतिस्तु दैवाधीना। यदि व्याकरण एव द्वादशवर्षाण्यतिवाहितानि भवेयुर्हन्त! कथंकारं संस्कृतज्ञानां जीविकार्जनपद्धतिः प्राप्तव्या-स्यात्। व्याकरणस्य प्रयोजनं केवलं शब्दव्याक्रिया, अथवा महाभाष्योक्तान्यपि प्रयोजनानि भवितुमर्हन्ति। तत्प्रयोजननिर्वाहकं ज्ञानं तु षड्भिरेव मासैः सच्छात्राणां समीचीनतया प्रतिपन्नं स्यात्। अर्थवत् सूत्रेऽर्थावद्ग्रहणं किमर्थम्? अस्य प्रश्नस्य तोतारामोयपद्धत्योत्तरसज्जीकरणे जावान् कालोऽपेक्षितस्तावता तु सर्वमेव व्याकरणमधिगतं भवेद्धस्तामलकवत्।

अत्रावधेयम्। भाष्यकारस्य समये नासीदार्थिकी दुरवस्था दुश्चिन्ता वा संस्कृतज्ञानां नासीद् ग्रन्थबाहुल्यम्। अतो व्या-

करणसूत्रपाठानन्तरं भाष्याध्ययनं न दीर्घकालापेक्षं झटिति वक्तारो- भवन्तीत्यसूयां प्रकटयता भाष्यकारेण न साधु सम्पादितम् यथा लोका झटिति वक्तारो भवेयुस्तथैव तु सम्पादनीयम् । न केवलेन व्याकरणेनैव जन्मसाफल्यसिद्धिः स्यात् । अन्येऽपि विषया अधा- धिगन्तव्याः सन्त्येव । अद्यविज्ञान वृद्धिः सीमानमतिक्रामति । आधुनिकज्ञानमपि संस्कृतज्ञैर्ज्ञेयम् । गन्धवती पृथिवीति ज्ञानमात्रे- णैव पृथिविविषये ज्ञानवन्तो वयमिति सन्तुष्टाः संस्कृतविद्वान्सो निस्संदेहं दयापात्रतामुपगताः ! अतः पठन-पाठनक्रमं सर्वथा परि- वर्त्याल्पेनैव कालेन संस्कृतभाषाज्ञानं सम्पाद्यावशिष्टैश्च कालैः सर्वैरेव जीविकोपार्जनार्था काचिदन्या विद्या संग्राह्या । अक्षरविद्या तु नोदरार्था । ज्ञानार्था हि सा । ज्ञानार्थया विद्यया धनार्जनाशा तु नितरां व्यर्था । ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदो ध्येयो ज्ञेय- श्चेति भाष्यकारोक्तिस्तु न विस्मरणीयाऽपि पण्डितैर्विस्मारिता । अत एव सा विद्या दुःखाय खेदाय च सम्पन्ना । न सन्ति देशे विदेशेषु वा तावत्योऽध्ययनशाला यत्र सर्वेषां संस्कृतज्ञानामध्यापन वृत्तिदानेन निर्वाहः सम्पादितो भवेत् । दुःशकं चैतत् । करोपरि- करं समर्प्यावतिष्ठमानानां संस्कृत-विदुषां भोजन-दौर्बल्यं तु दुर्नि- वार्यमेव । यस्य कस्यापि धनवतः कैंकर्यसाधनापेक्षया भारवा- हिताऽपि वरम् । काऽत्र हानिः । कश्चन भारवाही स्वातन्त्र्येण शिरसा भारं वहन् आणकद्वयमाणकत्रयं वा घटिकयैवोपार्जयन् कथं युज्येत् । निन्दातस्तु न भेतव्यम् । मूर्खाः कैङ्कर्य-लम्पटाः अनासादितस्वातन्त्र्यपरमपुरुषार्थाः स्वातन्त्र्येण जीविकां निर्वहन्तं तादृशं मानधनं निन्दिष्यन्त्येव । भवतु तथा । तत्र न मर्यादा हानिः । मर्यादात्वस्माभिरेव कल्प्यते । भृत्यत्वमुत्तमकोटौ गणितमत एव तत्र दुष्टेऽपि वस्तुनि पक्षपातः । स्वतन्त्रप्रवृत्तिकैः कल्पितां तां ग्राह्यत्वेन प्रतीयमानां मर्यादां विच्छिद्य स्वातन्त्र्येण लोकोप-

योगिनी लोकानुसारिणी च मर्यादा स्थापनीया। तामनुसरन्न-कोऽपि दूष्यः स्यात्। विलायतीमलमलवस्त्रधारणं पूर्वं मर्यादा-ऽसीत् सर्वैरेव श्रेष्ठिभिः कुलिनैर्धनविद्भवलैर्मलमलवस्त्रमेव धारणी-मिति प्राक्कालीना मर्यादा। अद्य तु कश्चन यदि खद्दरधारी न भवति देश–प्रेमविहीनो धिक्कृतो भवति। यस्मिन्देशे जनिः यत्र च जीवनं, तद्देशोद्भववस्तुभिरेव व्यवहार्यमिति तु मानवोचितो धर्मः। मर्यादा परिवर्तिता देशं कालं चानुसृत्य मर्यादा व्यत्यासस्तु कर्तव्य एव। अन्यथा कथमुज्जीवनं स्यात्,

संस्कृत– विद्वद्भिर्भाषान्तरेष्वपि ज्ञानवद्भिर्भाव्यम् अन्यथा व्यवहारपाटवं नोपलभ्येत। दानं प्रतिग्रहश्चेत्युक्तरीत्या जीवन यापनाशा तु हेयैव प्रतिग्रहस्तु निकृष्टं कर्म सत्स्वप्यनेकेषु निर्दय-पुरुषेषु प्रतिग्रहीतृषु प्रतिग्राहयितारस्तु न सन्ति। कुतस्तर्हि प्रति-ग्रह—पचाशा? अतः समीचीन एव पन्थाः समादिष्टः संस्कृतभा-षाज्ञानव्यतिरिक्तमन्यभाषाज्ञानोपार्जनं कलाकुशलतोपार्जनं च नाम।

कथं तर्हि ब्राह्मणत्वमव्याहतमव तिष्ठेत? तिष्ठेदेव तत्। अनार्यराज्ये न वास्तव्यमिति हि शास्त्रम्। उष्यते तु सर्वैः। राजा-न्नं शूद्रान्नं तु न भोक्तव्यमिति शास्त्रोद्घोषः। भुज्यते तु सर्वैः। शूद्रसविधे श्रण्वत्सु वा शूद्रेषु वेदो नाध्यापनीयो, न वा उच्चार-णीय इति वैदिकसम्प्रदायः। अध्याप्यते उच्चार्यते च सर्वैः। संस्कृतेतरा भाषा तु नाध्येयेति सनातनो धर्मः। अधीयते च सर्वैः। तथा तथा ऽचरन् न कश्चिद्धप्रत्यवैति। किं कर्तव्यम्? भगवान् कालः खलु स्वेच्छानिच्छया वाप्यनुसर्तव्य एव, शूद्रा विहरन्ति राजमार्गे। राजमार्गे वर्तमानायां पाठशालायां यदि वेदो नाध्या-पितो भवेत्तर्हि वैदिकमहाशयेन तत्र प्रयोजनमेव किं स्यात्। गृह एव स्थेयं तेन। अगत्याध्याप्यते। एवं सर्वा एव कलाः संसार-

निर्वाहार्थमगत्याऽपि सम्पादनीयाः ब्राह्मणत्वं तु पापात्प्रच्यव्यते। पापं च यस्य कस्यापि हित-विद्रावणेन अहिताहितसाधनेन वा जायते। संस्कृतज्ञेन ब्राह्मणेन वाणिज्यसम्पादने कृते न भवति कस्यापि हितविद्रावणमहितसंपादनं वा। वाणिज्येन न भवति ब्राह्मणत्वच्युतिः। निश्शुल्कमध्यापनादिकार्यं कुर्वन्नपि वाणिज्येन वा सत्पथेन जीविकामर्जयन् कथं ब्राह्मणत्वं निह्नुवीत न स्पष्टम्। मिथ्या व्यवहारेणैव वाऽन्यथाव्यवहारेणैव वा तत्प्रच्यवनं स्यात्। उदरनिमित्तं भृत्यत्वं सम्पादयन्नवश्यमेव ब्राह्मणत्वच्युतिं सं साधयति।

किं च नहि पापात्परं किमपि कर्म गर्हितव्यम् यत्र गर्हा तत्रैव संकोचः। इदं वणिग्भिरेव कर्तव्यम् इदं शूद्रैरेव कर्तव्यम्, इदं क्षत्रियैरेव कर्तव्यम्। इति संकोचस्य प्रयोजनमेवनास्ति। यदि सर्वं कर्म सर्वैः सुबुद्धया कृतं भवेत् गर्हा स्वत एव निवर्तेत। ब्राह्मणैर्वेतनमादाय श्रेष्ठिनां गृहे पाचनकर्म क्रियते। क्षत्रियैर्वेतनमादाय यवनानामपि धनिनां गृहे प्रहरित्वं क्रियते। वैश्यैर्वेतनमादाय यत्र कुत्रापि यद्वा तद्वा क्रियते। परन्तु नाद्य कश्चन तं तं ब्राह्मण्यादिभ्यः पतितं मन्यते निवृत्ता हि ततो गर्हा। अत एव सर्वेषां तत्र प्रवृत्तिः। तथा कृते ऽपि ब्राह्मणत्वं यथा ऽवतिष्ठते तथैव सर्वैः सर्वेषु कर्मसु सम्पादितेष्वपि तत्तद्वर्णव्यवहार्यत्वमुपलब्धप्राणं स्यात्। ज्ञानादाचाराद्वोत्पन्नं ब्राह्मण्यं ज्ञानविनाशादाचारपरिहाराच्चैवापहीयेत, न हि घटिकायन्त्रविशोधनमाचरन् वाणिज्येन वा व्यवहरन् स्वर्णकारितां लोहकारितां वर्धकीव्यवसायं वा स्वीकुर्वन् कोऽपि ज्ञानविहीनः सदाचारपतितो वा भवन् दृष्टः। जन्मजातं ब्राह्मणत्वं आशरीरं स्थायि। तन्नाशस्य शङ्कैवास्थाने।

अतो निश्चप्रचमेतत्, यदि संस्कृत-भाषाविद्भिर्भाषाज्ञानं सम्पाद्य जीविकार्जनार्थं कालान्तरोपार्जने दत्तावधानैर्न भवितव्यम् तर्हि नैष्फल्यमेवस्यादस्य प्रश्नस्य तच्चातीव लज्जास्पदमिति शम् ।



## संस्कृतस्य राष्ट्रभाषात्व-साधनोपायाः।

ले०—शास्त्री अमृतलालशर्म्मा, पेटलादस्थ श्रीनारायण संस्कृत-विद्यालय-प्रधानाध्यापकः।

इयं हि गीर्वाणगिरा "अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा। आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः ॥" इत्यादिवचोनिचयैरनाद्यनन्तत्वेन ख्यापिता परमपवित्रा सर्वविधविद्याकलानिधानभूता सृष्ट्यारम्भादद्ययावत् सर्वेषां प्राणिनामपरिमितोपकारकारिणी प्रदीपवत्सर्वार्थविद्योतिनी धर्मार्थकाममोक्षाख्यचतुर्विधपुरुषार्थसाधिका. कस्य सचेतसः कृतज्ञस्य भारतीयस्य हिन्दुपदाभिधेयस्य मनसि बहुमानपात्रं न स्यात्। न केवलं भारते, समस्त भूमण्डलेऽस्या भूयान्प्रचार आसीदिति "एतद्देशप्रसूतस्य सकाशादग्रजन्मनः । स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥" इति मनुवचनेन व्यक्ती भवति। नरेन्द्र-

चूडामणिना वदान्यतायशःशशिधवलितदशदिगन्तेन श्रीमता भोजराजेन संस्कृतकाव्यरचनानभिज्ञस्य धारानगराद् बहिर्निष्क्रमणाज्ञायां घोषितायां राजपुरुषैरानीतस्य कस्यचित् कुविन्दस्य (पटनिर्मातुः) "काव्यं करोमि नतु चारुतरं करोमि यत्नात्करोमि यदि चारुतरं करोमि। भूपालमौलिमणिमण्डितपादपीठ हे साहसाङ्क कवयामि वयामि यामि॥" इत्यादिपद्यनिर्माणेन भारतेऽस्याः कीदृशी व्याप्तिरासीदिति सुव्यक्तम्! एवं पुराऽखिलभूमण्डलमाननीयेयं वैदिकी, भाषारूपा चेति द्विविधाऽपीयं सुरसरस्वती स्वगतगुणगरिम्णैव अद्यापि सर्वदेशीयैः सज्जनै र्बहुमन्यते सशिरःकम्पं श्लाघ्यते च। अस्या लालित्यं सर्वाङ्गसौष्ठवं शृङ्गारवीररसादिनिरूपणेऽप्रतिमसामर्थ्यं, मानवहृदयस्थसर्वविध भावविवरणपटुत्वं सुश्लिष्टत्वं गुणालङ्कारादिवैशिष्ट्यञ्च जगति वर्तमानासु भाषासु क्वाप्यलभ्यम्।

यावद्भारते वैदिकधर्मप्रचारः सुव्यवस्थित आसीत्, वेदोक्तयज्ञाद्यनुष्ठानमविच्छिन्नमासीत्, वर्णाश्रमव्यवस्था च सुदृढाऽऽसीत् धर्मकार्येषु राज्यकार्येषु सामाजिककार्येषु च संस्कृतभाषयैव व्यवहारः प्रावर्त्तत, तावद्भारतस्य सुवर्णयुग आसीत्। तदा भारतदेशस्य आर्थिकनैतिकसामाजिकाध्यात्मिकोत्कर्षस्य सीमा सुविदितैव इतिहासविदां विदुषाम्।

यदा तु कलिप्रभावेण भारतीयानां राज्ञां कामक्रोधाद्युपघातेन धर्मवैमुख्यं जातं, प्रजानामपि च राजानुवर्तिनीनां प्रायो धर्मपराङ्मुखत्वम्, अर्थकामपरायणत्वञ्च जातम्, जैनबौद्धादिमतोद्भवेन तत्प्रचुरप्रचारेण च वेदधर्मे लोकानां श्रद्धा शिथिलीभूता, बलिष्ठयवनाक्रमणादिना च क्षत्रियनरेशानां प्रतापभानुरस्ताचलमारूढः, राज्ञां परस्परकलहेन हिन्दूनां सङ्घबलं विलुप्तम् वर्णाश्रमधर्ममर्यादा च

शिथिलतां गता तदा अश्रयमान्द्याद् देवगिराऽपि ह्रासं गतेति विभाव्यते ।

यवनशासनकाले भारतीयस्य चक्रवर्तिनरेन्द्रस्याभावेऽपि तत्तद्देशाधिपतयः प्रभावशालिनो धर्मप्रवणाः क्षत्रियनरेशा यावदासन्, तावदस्याः संरक्षणं सम्यग् जातम् । यतस्तस्मिन्काले शासनपरिवर्तनेऽपि प्राचीनशिक्षणप्रणाल्यां परिभ्रंशो नाभूत् । हिन्दूनां चेतसि धर्मभावना संस्कृतविद्यानुरागश्च जाग्रतावेवास्ताम् ।

वर्षशतद्वयाद् ह्रूणसाम्राज्यकाले शिक्षाप्रणाल्याः परिवर्तनात्; तस्यां च शिक्षणप्रणाल्यां सनातनधर्मशिक्षणस्य निवेशाभावाज्जीविकालाभलोभेन शासनप्रभावेण च प्रायस्तच्छिक्षणग्रहणपरायणानां प्रजानां चेतांस्येव परिवृत्तानि । धार्मिकभावनात्यन्तमुपेक्षाविषयतां गता । हिन्दुभिः प्रायः स्वरूपमेवविस्मृतमित्युच्यते चेन्नसातिशयोक्तिः ।

एवंविधेऽपि व्यतिकरे देवभाषा स्वीयगुणगौरवात्, केषांचिद् ब्राह्मणादीनाञ्च परम्पराप्राप्तस्य वेदवेदाङ्गाद्यध्ययनाध्यापनव्यवसायस्य जागरूकत्वात् तेषां तत्रानुरागातिशयाद् धार्मिकनृपाणां सद्गृहस्थानां च तत्राऽऽदरबुद्धिसद्भावात् संस्कृतशालापाठशालादिप्रवृत्त्या, इदानीमपि सा समुज्जीवति ।

अथास्याः पुनरपि राष्ट्रभाषात्वप्रापणमनोरथो मान्यवराणां केषांचिद्विदुषां चेतसि प्रादुर्भूतः सोऽवश्यं श्लाघनीयः । किन्त्वेतन्मनोरथसिद्धिः संस्कृतज्ञविदुषां संस्कृतानुरागिधनिकानां चोत्साहातिशयं कार्यदक्षतां राज्यसाहाय्यं चापेक्षते । यदा हि राज्यशासनसभासु धार्मिकाणां प्रजाप्रतिनिधीनां संख्याधिक्यं संपादितं स्यात् तदैव राज्यसाहाय्यं सुलभम् । उक्तापेक्षापूर्तौ सत्यां, यथेदानीं

प्राथमिकशिक्षणं देशभाषाप्रधानं माध्यमिकशिक्षणं च आङ्गलभाषाप्रधानं एवमेवोच्चशिक्षणमपि आङ्गलभाषाप्रधानं प्रतिनगरं प्रतिग्रामं च प्रवर्तितमास्ते, तद्विपर्यासेन सर्वत्र संस्कृतप्रधानतायां सत्यां संस्कृतभाषा आबालवृद्धपरिचितास्यात्तदासौ राष्ट्रभाषात्वयोग्या स्यात्। काठिन्येन संस्कृताध्ययनं परित्यजन्ति बालाः, एतत्परिहारस्तु, सरलानां प्रायो गद्यमयीनां रसपूर्णनैतिकधार्मिकव्यवहारिकवार्त्ताविहुलानां क्रमिकपाठावलीनां निर्माणेन सुसाध्यः तदर्थं संस्कृतभाषाया वैकृतोत्पादनकल्पनं तु न रुचिरम् । संस्कृतभाषायां हि सरलप्रयोगाः सुलभाः। एकस्यानेके पर्यायाः सन्ति तन्मध्ये ये लौकिकभाषासमासन्नास्तादृशानामेव शब्दानां विन्यासः प्राथमिक पाठावलीषु कर्तव्यः शब्दरूपाणि च सरलान्येव स्थाप्यानि। यथा यथा ऽग्रे बालानां संस्कृतज्ञान-वृद्धिः सम्पद्यते, तथ तथा विशिष्ट प्रयोगविन्यासः पुस्तकेषु योजयितव्यः।

इदानीं प्राथमिकमाध्यमिकशालासु वर्षसप्तकेन वर्षदशकेन वापि तत्तद्भाषाज्ञानं सम्पूर्णं नैव भवति। संस्कृतस्य तु वर्षत्रयेण सामान्यभाषाज्ञानं सुसंपादम्। अधिकाध्ययनेन तत्तद्विशिष्टविषयज्ञानं यथा योगमवश्यमेव। भवति। इदानीन्तनेतिहासभूगोल-भौतिक-विज्ञानपुस्तकानां च संस्कृतेऽनुवादः कर्तव्यः। एवमादिप्रकारैः संस्कृतभाषायाः सर्वसाधारणपरिचये सत्येव सा राष्ट्रभाषा स्यात्। अत उक्तोपायानुष्ठानार्थी विद्वत्समाजेन भूयो भूयः प्रवर्तितव्यम् "अनिर्वेदः श्रियो मूलम्" इत्युक्तिमनुसृत्य अविरत सातिशयप्रयत्नसाध्यमिदं शुभलक्ष्यम्। भगवान् महेश्वरस्तादृशमुत्साहमानुकूल्यञ्च संपादयत्विति संप्रार्थ्य विरमामि

—:::*:::—

# आत्मगीतम् ।

( ले०— श्रीकर शास्त्री, अयोध्या । )



अपि संस्कृतभाषोद्धारकरम् ।
क्रियतामयि श्रीकर कर्मवरम् ॥

पतितं किल भारतवर्षमहो, न च शान्तिमुपैति सतर्षमहो ।
कुर्वन्ति परे सङ्घर्षमहो, न हरन्ति जना विपदां प्रसरम् ॥

अपि संस्कृतभाषोद्धारकरम्,
क्रियतामयि श्रीकर कर्मवरम् ।

इटली, जापान, ब्रिटेनजनैः, जर्मन, अमरीका, फ्रांसतनैः ।
निजभाषागौरवलब्धधनैः, ज्ञातं विहितं किं शीघ्रतरम् ॥

अपि संस्कृतभाषोद्धारकरम्,
क्रियतामयि श्रीकर कर्मवरम् ।

आन्ध्रः, पञ्जाबो, नेपालः, यू० पी०ः सी० पी० र्वा बङ्गालः ।
बर्माऽत्र बम्बई सन्थालः, राजस्थानं जागर्ति परम् ॥

अपि संस्कृतभाषोद्धारकरम्,
क्रियतामयि श्रीकर कर्मवरम् ।

वर्णाश्रमधर्मो ह्रासमितः, पाश्चात्यप्रभायास्त्रासमितः ।
तुर्कश्च सतर्को ग्रासमितः, जापानः प्रसरति दैन्यहरम् ।

अपि संस्कृतभाषोद्धारकरम्,
क्रियतामयि श्रीकर कर्मवरम् ।

यावन्न भवति भाषोद्धारः, तावन्न भवति राष्ट्रोद्धारः ।
कथमपि न भवति धर्मोद्धारः, निजसंस्कृतिरक्षणदक्षमरम् ॥

अपि संस्कृतभाषोद्धारकरम्,
क्रियतामयि श्रीकरकर्मवरम् !



# संस्कृतभाषाप्रचारः ।

( ले० श्रीहरिदत्तशर्मा, सप्ततीर्थो, वेदान्ताचार्यः आगरा ,)




रतवर्षे गौराङ्गीसाम्राज्यप्रतिष्ठातः प्रागासीत्सुरगव्याः प्रभूतः प्रचारः । तदात्वे विशालेषु नगरेष्वेव न किन्तु ग्रामादिका-स्वपि गीर्वाणगव्या उपालभ्यन्त प्रकाण्डपण्डिताः । भूयांसः पुमांसो यौरोपीयाणां शासनकाले वाष्पयामतडिद्यन्त्रादिशिक्षासम्भारमलं प्रशंसन्ति । गौराङ्गप्रभूणां तु प्रतिज्ञैवैषाऽस्ति यदस्माभिरेवार्या-वर्त्तीयाः सुसभ्यतां सुशिक्षितत्वं चोपनीताः । अस्मदीयसुशासनतः प्राग्भारतमासीदज्ञानतमश्छन्नम् । क्वैतावन्तो विद्यालया महाविद्यालया वाऽत्राऽवर्त्तन्त । अधुनाऽपि नितान्तभ्रान्तस्य मतस्यास्य मन्तारो लोकाः प्रचुरमात्रायां प्राप्यन्ते येऽपि "सुशिक्षित" शब्दम् "एजूकेटेड" शब्दं वा आङ्गलभाषाभिज्ञत्वेनार्थापयन्ति । तेषामीदृत-मतौ य आङ्गलभाषानभिज्ञोऽस्ति नासौ शिक्षितपदवाच्यतामर्हति । अहो ? चरमावधिः कुविचाराणाम् । दूरदर्शी कूटनीति निपुणो लार्ड मेकाले महोदयो भारते आङ्गलभाषाप्रचारे यं हेतु मुपन्यास्थत् वस्तुतः सोऽतीव साध्यसाधनत्वमव्रजत् । देशेऽत्र यदा यौरोपीयाणां राज्यमनावद्धमूलमेवासीत्तदा साधनानां विषये शासकवर्गस्य सम्मुखे प्रश्न उपस्थापितोऽभूव, शिक्षाभाषायाः प्रश्नोऽप्यभवद्विचारायत्तः

मार्यानपेक्ष्य सुरवाचो यवनानपेक्ष्य प्ररवीभाषायाश्च नाम प्रास्तूयत, परं संस्कृतारव्योर्भाषयोः कतरया नाम शिक्षाभाषया भाव्यमिति न निर्णयतुलामध्यरुक्षत् । मेकले महोदयो विवादविषयतामितां समस्याममूमनायासमेव सुकरी चक्रे । उवाचासौ, यद् यावदमुयोरुभयोर्मृतगव्योर्बहिष्कारः शिक्षाक्षेत्रान्न क्रियते तावच्छासनकाठिन्यानि न दूरमुपैष्यन्ति । तद्भारतीयांश एव कस्याश्चिदपि विजितजातेः साफल्येन चिरं स्वायत्तीकरणस्यामोघमौपयिकमस्ति । भारतस्य सर्वथा स्वायत्तीकरणमभिसंमतं चेत्तदा कार्यमिदमाङ्गलभाषाप्रचारेणैव शक्यते सम्पादयितुम् । आङ्गलभाषाशिक्षया भारतीयानां कायकल्पः संपत्स्यते ते स्वीयं गौरवं विस्मृत्य प्रतिवचनं प्रतिकृत्यश्चास्माकं वाचा वाचं मेलयिष्यन्ति, तदा भविष्यन्त्येते ऽस्माकं परमार्थतो भक्ता अशक्ताः । यत्कार्यमाङ्गलभाषाशिक्षया ध्रुवं संस्कृतिसंचारेणायत्नेनैव भविष्यति न तद् बलाद्धर्मग्राहणेनापि भवितुमर्हति । शिक्षयानयैतेषामाकृत्यादिकं तु प्रकृत्यैव स्थास्यति परमेतेषां मस्तिष्कं हृदयञ्च पाश्चात्य संस्कृतौ परिवर्तिष्यते । 'नाकारि हिंसा विजयश्च हस्ते' । मेकाले महोदयस्यास्याः कपटनीतेर्बीजमद्यैकस्य महतो वृक्षस्य रूपेण परिणममानमालोक्यते । भारतविजये तद् कार्यं बृटिश सैन्यैरपि न समपादि यदाङ्गलभाषया । अमुयास्माकमाचारविचारेषु तथाश्चर्यजनकं भयङ्करञ्च परिवर्तनमापादि यदधुना वयं स्वीयायां कस्याश्चिदपि वार्त्तायान्न श्रद्दध्महे । स्वीयां सभ्यतां संस्कृतिं प्राचीनत्वञ्च वयं सर्वथैव विस्मृतवन्तः । आकृतावपरिवृत्तायामपि मस्तिष्कं हृदयञ्चास्माकमित्थं परिवर्तितं येन स्वदेशे वसद्भिरप्यस्माकमाचारविचारसंचारेषु समैः वैदेशिकैरभूनि । स्वपूर्वपुरुषाणां गौरवम् स्वीयप्राचीनैतिह्यं स्वदेशमहिमानं, स्वधर्मे निधनं श्रेयः, स्वसभ्यताचारादिकं सर्वमेकपदे विस्मृतिपथमनायि । अत एवाभवदमुना [illegible] भित्वा हिन्दुजातेः पुनरु-

द्वारार्थी स्व प्राचीनसाहित्यावलम्बनमत्यावश्यकमस्ति । अनुनैव स्वपूर्वजनामुदारविचाराणां धार्मिकव्यवहाराणामादर्शस्य च बोधो भवितुमर्हति । संस्कृतसाहित्यमेवैतादृशमस्ति स्वच्छं दर्पणं यस्मिन् भारतीयानां पुरातनं यशः स्फटिक इव प्रतिबिम्बित-मालक्ष्यते । अथातो भाषाविज्ञानबुद्धयापि सुरभारतीमध्ययन मनिवार्यमास्ते । गीर्वाणगिरमुपजीव्यैव पश्चिमा विपश्चितो विज्ञानमसृज्यन्त । इयमेवास्ति भारतीयभाषाणां जननीति महान्तो महान्तः सन्तः स्व्यकुर्वत मुक्तकण्ठम् । संस्कृतभाषामहत्वं प्रथयता कथयता तदसंख्यातगुणान् मोक्षमूलरमहोदयेनाप्यभाषि-यत् संस्कृतभाषा सर्वासु भाषासु प्राचीनास्ति, नैव भारतीय-भाषान्तराणां संस्कृतसाहित्यस्य च ज्ञानं विना शक्यैषाध्येतुमस्माभि-रन्यैर्वा । चेत्कश्चिन्मन्येतापि यद्यौरोपीयैर्भारतस्य सकाशान्नाशिक्षि किञ्चित्तथापीदन्त्ववश्यं स्वीकार्यं भविष्यति यदन्यासां भाषानाम-पेक्षया संस्कृतभाषामनुत्तमोत्तमैरन्तःसारैर्विचारैरुपाकुरुत । यौरुपीयान् संस्कृताध्ययनार्थमुत्साहयन्नाह च महोदयः ( अक्रमे दुरध्येयत्वेनाभासमानां सुरभारतीं यूयमनवरतश्रमेणाध्येष्यध्वे तदा कामगौरिव सुरगवीयं युष्मत्समक्षं साहित्यसम्बन्धीनि निगूढा-नि तानि तानि रहस्यानि विवृतीकृत्योपस्थापयिष्यति यान्यद्या-वधि युष्मद्भियो गोचरतान्नोपेतानि ) संस्कृतसाहित्यक्षेत्रमप्यति विस्तृतं वर्तते, अस्मिन् मानवजातेरभ्युदयनिःश्रेयससम्बन्धीनि प्रत्येकविषयेऽसंख्यातग्रन्थानां रचना विद्यमानास्ति । विद्यावैरि-भिर्वैदेशिकैर्वह्निसात्कृतेष्वपि बहुषु पुस्तकालयेषु प्रकारान्तरेण प्रका-शमुपगतेषु परः सहस्रेषु सन्दर्भेषु चाद्य कराङ्कितानां संस्कृत-पुस्तकानां संख्याऽयुतादप्यधिका निगद्यते तज्ज्ञैः । आध्यात्मिक-विषयका ग्रन्थास्तु शर्मण्यस्य कस्मिंश्चिदपि प्रदेशे कस्यामपि भाषा-यान्नतथोपलभ्यन्ते यथा संस्कृते । वीक्ष्यैवौपनिषदमनुवादं शर्मण्य-देशीयाश्चकिता इवासत । एष ह्यार्यजातेर्भारतवर्षस्य च कोऽपि

महान् दुर्भाग्योदयो यदेवं सर्वाङ्गीणायाः सुरवाण्या आचारप्रचारौ प्रत्यहमल्पतां भजन्तौ पश्यामः । या किल ब्राह्मणजातिरनादिकालाच्चिरदारिद्र्यव्रतं धृत्वापि सुरभारतीमनुपहतामरक्षत् साप्यद्यपराङ्मुखीभूय आङ्गलभाषां ब्रह्मभाषामिवाधीयाना निभाल्यते अहो मोहस्य महिमा ! । अद्य खलु प्रेक्षमाणानामेवास्माकं मातृभूतां संस्कृतभाषां मृतभाषां भाषन्ते जनाः। वस्तुतस्तु नैषा भाषा मृता प्रत्युत तत्पक्षपातिनो वयमेव मृता । यस्या वक्तारो बोद्धारश्चाद्यापि लक्षशो विपश्चितो विद्यन्ते । या हि आर्यावर्तीय संस्कृतज्ञानां ज्ञानविचारविनिमयस्य साधनीभूतास्ति तस्या मृतभाषेति शब्देन संकीर्तनं तथैवास्ति यथा भारतीयानां स्वाराज्यायोग्यत्वकथनम् । ये हि देवभाषां मृतभाषां वदन्ति तेषां स्वर्गीयो महाकविर्महेशचन्द्रः समुचितमुत्तरं प्रादात् पद्येष्वेषु-

"ये तु केचिदिमां दिव्यां भारतीममृतामपि ।
मृतां वदन्तो निन्दन्ति दूरात् परिहरन्ति च ॥
मूढास्ते पण्डितम्मन्या बालास्ते वृद्धमानिनः ।
अन्धास्ते दृष्टिमन्तोऽपि प्राप्ता गजनिमीलिकाम् ॥
पश्यन्तोऽपि न पश्यन्ति ते हि ब्राह्मीमितस्ततः ।
अद्यापि ब्राह्मणमुखे नृत्यन्ती रुचिरैः पदैः ॥
यावदास्ते त्रयी लोके चतुर्मुखमुखोद्गता ।
यावद्वा रामचरितं वाल्मीकिकविचित्रितम् ॥
क्षरन्त्यमृतधारा वा यावद् व्यासस्य सूक्तयः ।
वाग्देव्या वरपुत्रस्य कालिदासस्य वा गिरः ॥
तावदेषा 'देषभाषा' देवी स्थास्यति भूतले ।
यावच्च वंशो ऽस्त्यार्याणांतावदेषा ध्रुवं ध्रुवा ॥

बहवस्तु वदन्ति यत्संस्कृताध्ययनेन किमिति समयो व्यर्थतान्नेयः यतो हि संस्कृतस्याङ्ग[illegible]भाषयानुवर्तयन्त्यौरेव वि-

पयज्ञानं शक्यते कर्तुम् । संस्कृतभाषा ऽति जटिलत्वेन दुरध्येयास्ति तद् व्याकरणमप्यतिदुर्बोधं रटनसाध्यञ्चास्ति यद्धि वैज्ञानिक-शिक्षापद्धतेः प्रतिकूलमस्ति । तानेवं वदामो यत्कस्याश्चिदपि भाषाया वास्तविको बोधो ऽनुवादमुपजीव्य न शक्यते कर्तुम् , इद-मेता दृशमेवास्ति यथा कोऽपि अकृत्रिमं घृतं दुग्धं वा परित्यज्य शष्पादिनिर्मितं कृत्रिमं घृतादिकं भुक्त्वा शरीरपुष्टिं स्वास्थ्या-दिकञ्च कामयेत । अत एव वयं प्रेक्षावत्सु देशीयेषु विद्वत्सु सानुरोधं सविनयञ्च प्रार्थयामो यदैहिकामुष्मिकयोः श्रेयसोः कृते भारतीयानामतीतगौरवस्य संस्कृतेश्च रक्षार्थं प्रयतध्वं मनो वाक्कायैः सुरगव्याः समुन्नत्यै ।



## पाश्चात्येषु संस्कृत-प्रचारः ।

ले०—रे० आर्थर ई० मैक्सी, इङ्गलेण्ड ।






विदितमिदं समेषां शेमुषीजुषामिति शास्त्रविदां विपश्चिताम् यद् भारतादेव संस्कृतभाषायाः सर्वत्र सुप्रसारो ऽभूदिति । यद्यपि सांप्रतमस्मासु यौरोपीयेष्वपि तस्य प्रचारः सर्वत्र विश्व-विद्यालयेषु लब्धावसरः परिवर्धमान अवलोक्यते तथापि इदमेव ब्रूमो यदस्यावगन्तारः प्राग् हिन्दव एवासन् ।

तेषां परिवर्द्धमानामुन्नतिमवलोक्य यौरोपीयैः निर्धारितं यदस्या उन्नतेर्हेतुः संस्कृतसंस्कृतिरेव येन केनाप्युपायेन यौरोपीयेष्वपि तस्या भाषाया तदुपवर्णितशभ्यतासहिताया प्रचारोऽत्र कर्तव्य एव। एतदेव लक्ष्यीकृत्य १७६१ तमे खिस्ताब्दे वलटेरियाभिधानः कश्चित् फारसीलेखकः प्राग् कृत्रिमं यजुर्वेदमेकं हर्षोत्फुल्लमनाः फ्रांसस्य राजकीयपुस्तकालये निनाय। अत्रेदमैतिह्यम्—

मद्रासप्रान्तीयेन केनचिदीशाधर्मयाजकेन हिन्दुधर्मशिक्षा मिलाषुकेण संप्रार्थितः कश्चित् पण्डितः प्रतारणधिया कृत्रिमं यजुर्वेदं तस्मै प्राऽदिशत्। तदेवपुस्तकं वलटेरियाह्वयेन फ्रांस-पुस्तकालये नीतम्। एवमेव महाराष्ट्रीयेन केनचिद् कोविदेन संस्कृतग्रन्थ-प्राप्तये कृतश्रमोऽपि कोलब्रूकमहोदयः प्रतारितो जातः।

१७५२ ईशाब्दे कर्नल पेलियरनाम्ना महाराज-प्रतापसिंह सहयोगेन ब्राह्मणैः चतुर्णां वेदानां प्रतिलिपिं कारयित्वा प्राप्ताश्चत्वारो वेदाः। त एव वेदाः सर्व-प्राथम्येन वृटिशम्यूजियम संस्थायां कर्नल-पोलियरमहाशयेन १७८८ तमेशाब्दे प्रेषिताः। एवमेव पाश्चात्येषु क्रमशः संस्कृत-साहित्यं वृद्धिं पुपोष। तथा लब्धेषु ग्रन्थरत्नेषु अध्ययनाध्यापनानां प्रचारोऽसरत्। अतः पूर्वमपि भारत एव गत्वा संस्कृतं पठन्त आसन्। १६६१ ईशाब्दे मार्शल-महोदयेनैव पाश्चात्यभूमौ सर्वप्राथम्येन संस्कृत-भाषा पठिता।

फ्रांसेङ्गलैण्डयुद्धावसरे विल्किसनमहोदयः, कृत-संस्कृत-भाषाध्ययनः १८०२ ईशाब्दे फ्रांसयात्रापरायणः फ्रांसशासकेन पैरिसनगरेऽवरुद्धः। तत्रावरुद्धेनानेन विल्किसनमहोदयेन कियन्तः फ्रांसनिवासिनः संस्कृतमध्यापिताः। तत्र छात्राणां संस्कृते परमामभिरुचिमालोक्य पैरिसविश्वविद्यालये संस्कृतशिक्षाया अपि

स्थानं दत्तं प्रवन्धकमहोदयैः। पैरिसविश्वविद्यालयस्य संस्कृत-भाषायाः प्रथमाचार्यः प्रख्यापितदूरदेशकीर्तिः "बरनफ" महोदयोऽभवत्। अस्यानेके शिष्या अभूवन् मैक्समूलरमहाशयं को न जानाति शिष्यमेतस्य।

काले काले अनेकेषां संस्कृत-ग्रन्थानामपि प्रकाशनं बभूवात्र पाश्चात्येषु देशेषु यथा—सर्वेभ्यः पूर्वं रोमनगरे १७९० खिस्ताब्दे पावोलिनो नाम्ना सम्पूर्णमेकं संस्कृत-व्याकरणम् प्रकाशितम्। १७९५ ईशाब्दे फ्रांसे फारसीभाषातोऽनूद्योपनिषद्ग्रन्थाः प्रकाशिताः। एवमेव १८०५ तमे वर्षे कोलब्रूकमहोदयः ऋग्वेदस्य सारं संगृह्य वैदिकगवेषणाया बीजमारोपितवान् १८३० वर्षे "रोजन" महोदयेन ऋग्वेदस्य कतिपया अंशा लण्डन नगरे प्रकाशीकृताः। १८३८ खिस्ताब्दे तदीयेन लाटिकानुवादेन साकं पूर्वोक्तवेदस्य प्रथमाष्टकं प्रकाशितं प्रचारितं च। एवमुत्तरोत्तरं वेदादिसंस्कृतग्रन्थानां प्रकाशनं व्यावर्धत।

भारतस्य भूत-पूर्वगवर्नरेण जनरल-वारन हेस्टिङ्ग्ज-महोदयेन वाराणसीयैः पण्डितैः स्मृतीनां सारान् निष्काशयित्वा पारसीभाषायां प्रागनुवाद्य पश्चादाङ्गलभाषायां चानुवाद्य प्रकाशितम् तदवलोक्य प्राचां शासनपद्धतेर्वैलक्षण्यंचावलोक्य कतिपयैरंग्रेजैः स्मृतेः मूलग्रन्थानध्येतुं काश्यामागतम्। कुशाग्रबुद्धियैस्तैरत्पलपकालेनैव संस्कृतविद्यायां परमोन्नतिरकारि। तेषु सर-विलियमजोन्जमहोदयेन एशियाटिकसोसाइटीनामकसंस्थायाः संस्थापनमकारि भारतस्य वङ्गप्रान्ते। अस्याः संस्थाया एष उद्देश्यो मुख्यत्वेन कृतः यदियं संस्कृत-ग्रन्थान् संरक्ष्य तेषां समालोचनात्मकं प्रकाशनं विदध्यात्।

फ्रांसीयपेरिसविश्वविद्यालय-संस्कृताध्यापकस्य बरनफ-महोदयस्य शिष्यः पूर्वस्मृतो मैक्समूलरमहोदयः १८४६ तमेशाब्दे

सायणभाष्यसहितस्य ऋग्वेदस्य प्रकाशनं सर्वप्रथमं विधाय संस्कृतसंसारस्य महानुपकारश्चकार। बरनफस्य प्रसिद्धो द्वितीय-शिष्यो रोथमहोदयः तथा वोहटलिङ्गमहोदयो रूसदेशस्य राजधानीभूते सेन्टपीटरस्वर्गे संस्कृतस्य सर्वेभ्यो बृहत्तरं कोशं भूरिश्रमेण प्रकाशितवन्तौ १८५६ खिस्ताब्दे। डा० रोयरमहोदयः एसियाटिक--सोसाइट्याः सहाय्यमवाप्य १८६४ तमेशाब्दे कृष्णयजुर्वेदीयतैत्तरीय-संहितायाः प्रकाशनमारब्धवान्। अग्रे गत्वा तत्कार्यं कावेलसाहबमहोदये न संचालितम्। १८६२-७० खिस्ताब्दैः कृष्णयजुर्वेदीयमैत्र्युपनिषदः प्रकाशनमेसियासोसायटीतः कावेलसाहबमहोदयेनाकारि। अस्मिन्नेव समये डा० बूलरमहोदयेन आपस्तम्बधर्मसूत्रस्य प्रकाशनं कृतम्। ११८५ खिस्ताब्दे फारसीभाषाविज्ञः पेरोसाहबमहोदयः सुलतानमुहम्मद-दाराशाह प्रबन्धेन ५० उपनिषदां फारसीभाषात अनुवादं विहितवान्। यद्यप्यत्र संस्कृते वा संस्कृतभाषातो नानुवादः कृतस्तथापि संस्कृतसाहित्ये महानुभावस्यास्य परमप्रीतिरासीदिति निदर्शितम्।

वेवरसाहबमहोदयः १८४८ अब्दतः वर्षत्रयेण काण्वमाध्यन्दिनशाखीयां वाजसनेयि-शुक्लयजुर्वेद-संहितां महीधरभाष्ययुतां रोमनलिप्यां प्रकाशितवान्। १८७६ वर्षे स्टेनजलरमहोदयेन यजुर्वेदीयपारस्करगृह्यसूत्रं सम्पादितम्।

मेक्समूलरमहोदयेन "इष्ट इण्डियाकम्पनी" कृतार्थसाहाय्येन १८४७ तः १८७५ ईशाब्दैः सभाष्यर्ग्वेदस्य सुललितं प्रकाशनं विधाय संस्कृत-साहित्यस्य यावानुपकारः कृतः स महामतेर्महात्मनस्तस्योचित एवेति। असौ महोदयश्चास्मिन्नेवावसरे इङ्गलेण्डतोऽपि मूलमात्रं प्रथमखण्डं पूर्वोक्तं वेदं प्रकाशितवान्।

मेक्समूलरः १७५९ तमेशाब्दे संस्कृतस्येतिवृत्तमाङ्गलभाषायां लण्डननगरात् प्रकाशितवान्। महामनसा वेवरमहोदयेनापि

संस्कृतस्येतिहासः वर्लिननगरात् प्रकाशितम् । एतदितिहासद्वय-लेखनेनैव स्पष्टं प्रतीयते पाश्चात्येषु संस्कृतेऽनुरागः प्रचारश्च । साम्प्रतं तु बहवः संस्कृतेतिवृत्तपरिचायका ग्रन्था पाश्चात्यैराङ्गलभाषायां कृताः विभ्राजन्ते ।

डा० म्यूरसाहवेनापि संस्कृतसाहित्ये भगीरथप्रयत्नः कृतः। एतच्चास्य वैदिकपौराणिकादिविविधग्रन्थसारभूतं समालोचना-पूर्णं पञ्चखण्डैः परिसमापितं ग्रन्थरत्नमवलोक्यैव प्रतीतिभाजो भवन्ति जना इति जर्मनीयेन रोथसाहवमहोदयेन १८४६ खिस्ताब्दे कश्चिद्वैदिक इतिहासोऽलेखि यश्च एसियाटिक-सोसाइट्या निःसूय-माणे इंग्लिसभाषामये पत्रे प्रकाशितो जातः खिस्तस्य १८४७ तः ४८ तमेऽब्दे काले । रोथमहोदयेन निरुक्तस्य प्राथमिकं संस्करणं जर्मनदेशे कृतम् । अधुना जर्मनीयेषु प्रचारतरो वर्तते संस्कृतस्य ।

एवमुक्तलेखपरंपराभिः पाश्चात्येषु संस्कृतानुरागिता प्रचार-त्वञ्च स्पष्टतया प्रतीयमाने विद्येते । अपरेऽपि कियन्तः संस्कृत-प्रचारकरा महान्तोऽत्राऽभूवन् दिग्दर्शनमात्रकृत-लक्ष्येन तेनोपस्था-प्यन्ते । आशासेऽतोऽधिकोऽपि संस्कृतस्य प्रचारोऽत्र भविष्यतीति विरम्यते ।



# संस्कृतमेव राष्ट्रभाषा ।

लेखकः–पं० रामचन्द्रशास्त्री किंजवडेकर, मीमांसाप्रकाशस्य-
सम्पादकः, पूना ।

## १ प्रस्तावः ।

अयि महामहिमशालिनः विद्वन्मानसहंसाः ! महदिदं प्रमोदस्थानं यत् परमदारुणतरे कलिकालेऽस्मिन् सर्वतः कोलाहलव्यापृतायां जीविकायामनर्घं स्वजीवितं नितान्तं संस्कृतभाषायाः राष्ट्रभाषात्वं समुद्घोषितुं कृतभूरिश्रमा विद्वल्लजाः अयोध्यानगरतः प्रतिसप्ताहं संस्कृताभिधेयं संस्कृतपत्रं प्रकाशयन्तीति । तस्यास्य पत्रस्य सप्तमवर्षस्य प्रथमसंख्यात्वेन राष्ट्रभाषाङ्कमुपचितकलेवरं नानादेशीयविद्वल्लेखगर्भितं प्रकाशितवन्त इति जानन्त्येव प्रेक्षावतामग्रेसराः, तथापि 'भानुःसकृद्युक्ततुरङ्ग एव' इत्याद्याभाणकोक्तरीत्या संस्कृतकार्यधूर्वहाः सम्पादकास्तत्प्रकाशकाश्च पुनरप्यनुपदमेव राष्ट्रभाषाङ्कपरिशिष्टाङ्कत्वेन कमप्यपूर्वं सर्वजनसंग्राह्यमङ्कराजं प्रकाशयितुं कामयन्त इति विलोक्य 'संपत्सम्पदमनुबध्नाति' इति महाकवेर्वाक्यं स्मरणसरणिं समायाति ।

तदेतस्मिन् राष्ट्रभाषापरिशिष्टाङ्के वयं "संस्कृतमेव राष्ट्रभाषा" इत्यभिधेयं कमपि लेखं लिखामः ।

## २ मानवीया संस्कृतिः ।

इह खलु विशाले जगति प्रतिदिनं संख्यातीताः प्राणिनो जनिमुपयान्ति जीवितक्षयं च सागरवदतिगंभीरे व्यतिकरेऽस्मिन् को वा गणयिता ? परमिथन्त्वेप्येतादृशाः प्राणिनो दरीदृश्यन्ते येषां जीवितहान्योरप्रमत्तं परिगणनं क्रियतेऽहर्निशं शास्त्रकपुरुषैः । ते एते मनुष्यजन्मानो मानवाः । इतरप्राणिनामपेक्षया श्रेष्ठतरत्वेनेदृशं व्यतिकरं लभन्ते । कोऽसौ विशेषः ? येनैकपद एव सर्वान्प्राणिनोऽधः कृत्य मूर्धन्यत्वं समपादयन्नेते ? इति चेत् संस्काराख्योऽयं विशेष इतरव्यावर्तको मनुजस्य मनुजत्वं निर्वोढुं क्षम एषु दृश्यते । यद्बलस्वधर्मसम्पादा युक्तं तदेव खलु परिगण्यते । मनुजस्य जीवितहान्योः परिगणने एतन्निदानं भवितुमर्हति । अतः सकले जगति-प्राणिनो द्विधाभिन्ना दृश्यन्ते- ( १ ) मानवाः ( २ ) तदितरे च । तत्र मानवैः स्वकीयासामान्यगुणेन स्वेतरेषां प्राणिनामाधिपत्यं समपादीति नाविदितं संख्यावताम् । संस्काराणां सर्वातिशायित्वमेव मनुजेषु वर्तमानमसामान्यो गुणः । तेन गुणेन सर्वेऽपि प्राणिनः पराजितास्तथा स्वगुणगरिम्णा ऊर्ध्वचराः पेशवीयांशवो देवयोनयः अपि प्रसभं समाक्रान्ताः, यत्सत्यं सर्वथेदं संस्काराणामेव विजृम्भितम् ।

## ३ भाषासंस्कृतिः ।

यथा खलु प्राणिषु मानवाः संस्कारैरेव श्रेष्ठा गण्यन्ते तथा सर्वासु भाषास्वेका संस्कृतभाषैव यथार्थनाम्नी संस्कारैरेवाधिराज्यं लेभे । भाषा हि नाम-सर्वेषां प्राणिनां स्वाभिप्रायबोधकः संकेतविशेषः । पशवः पक्षिणश्चापि नैजव्यवहारसाधकं मिथः संकेतं संसूचयन्तो दरीदृश्यन्ते । परं तेषां सर्वेषां प्राणिनां परस्सहस्राणां नैव भाषाभिधानं संस्काराभावात् । ते हि संस्काराः यथायथं यावद्यावत्

संकेतस्थिता भाषापदभाजो भवन्ति। अद्य जगति वर्तमानाः सर्वा अपि भाषाः सङ्केतरूपा एवेति निश्चप्रचम्। एतादृशासु सांकेतिकासु भाषासु मध्ये संस्कारैरेव संस्कृतभाषा मूर्धन्यभूता तिष्ठति। अत एवास्याः संस्कृतमित्यन्वर्थं नाम चकास्ति।

## ४ स्वदेशः, स्वभाषा, स्वधर्मश्च।

अयि प्रेष्ठाः! सुप्रथितमिदं स्वातन्त्र्यसंपादनमेव पुरुषाणां स्वनिर्वाहकमिति। उच्यते च 'सर्वं परवशं दुःखं सर्वमात्मवशं सुखम्' इति। सर्वेऽपि जना दुःखव्युदासपूर्वकं सातत्येन सुखमेव कामयन्ते इत्यत्र नास्ति संशयलेशोऽपि। एतत्सुखसम्पादकप्रयत्नपरेषु संख्यातीतेष्वद्ययावत्त एव सुखसंततिमाप्नुवन्तः, येषां देशे भाषायामनितरसाधारणं पूर्णस्वत्वं विद्यते, त एव च जनाः स्वातन्त्र्यशालिन इत्युच्यन्ते। ईदृशो भाग्यवन्तः पुरुषधौरेयाः। अपारे जगति पूर्ववत् संप्रत्यपि बहवो दृश्यन्ते, येषां स्वभाषायां स्वदेशे स्वधर्मे च आधिपत्यमप्रतिहतं वरीवर्ति। 'स्वभाषा' 'स्वधर्मः' 'स्वदेशः' इत्येतत्त्रितयमतीव मिथः सम्बन्द्धं परस्परपोषकं च। अनया दिशा विचार्यमाणे भारतीयानां सुखस्वातन्त्र्यादिगुणाभिलाषिणां कार्यसिद्ध्यै परिवर्णितत्रितयस्य स्वायत्तीकरणमेव परमं कर्तव्यमिति राद्धान्तः। यथा हि आंगलानां शार्मण्यानामितरेषां च तथाविधानां नियताः देशाः, भाषाः, धर्माश्च दृश्यन्ते तथाऽस्माकं भारतीयानां विविक्ततया दर्शयितुं न शक्यन्त इति महदिदं कष्टतमम्। अत एव सम्प्रति सर्वेषां तिरस्कारभाजनं नित्यदुर्गताः पारतन्त्र्य-पाश-निगडिताः अनुकम्पास्थानं जगतः संजाताः वयम्। अतो भारतीयैरेतद्दौर्जन्यपरिहाराय प्रथमं स्वत्रितयस्य स्वायत्ती करणं महता प्रयत्ननिचयेन विधेयम्। उपरि लिखितमेत्र यत् 'स्वदेशः स्वभाषा स्वधर्मश्च' इति यत् त्रितयं परस्परसम्बद्धं मिथःपोषकं चेति। अतः यस्य त्रितये परस्परसम्बद्धत्वरूपोऽयं गुणो दृश्यते तदेव त्रितयं

स्वपदार्हम् । यद्यपि सम्प्रति भारते नाना देशाः, विविधा भाषाः, नैके धर्माः अहमहमिकया स्वनामोच्चारादव्यवहितमेव पुरतः प्रादुर्भवन्ति, तथापि न ते स्वपदयोग्याः किन्तु तन्मध्यात् ( १ ) भारत वर्षम् ( २ ) संस्कृतभाषा ( ३ ) वैदिको धर्मः एतत्त्रयमेव भारतीयानां स्वविषयम् । एतत्त्रितये यदा भारतीयानां स्वत्वं परिदृश्येत तदैव भारतीया मनुजत्वार्हाः, इतरमानवपरंपरागणनयोग्याश्च भवेयुः । तत्र योऽयं भारते राष्ट्रीयसभाद्वारा सम्प्रति केवलं स्वदेशस्वायत्तीकरणसंरोहो दृश्यते, सोऽयमर्धजरतिय एवेति भाति । यत एते राष्ट्रीयसभापरिचालकमूर्धन्याः इतरद्वयं हठात् परिहरन्ति वदन्ति च निरर्गलमज्ञानपिशाचिकास्पृष्टा इव किमपि किमपि । यद्यपि महता कालेन भारतवर्षमिदं भारतीयानामेव स्वं भवेत् परं तदानीमितरद्द्वितयं तद्धस्तात् सुदूरमेव पलायितं स्यात् । एवंत्वे केवलं देशस्वाम्यमकिञ्चित्करमेव अतः 'संपूर्णं स्वातन्त्र्यम्' अभिलषद्भिर्भारतीयैरेकपद एव त्रयाणामपि स्वायत्तीकरणे प्रयत्नो निर्वोढव्यः ।

## ५ संस्कृतभाषाया असाधारणा गुणाः ।

उपरिवर्णितत्रये यत्, संस्कृतभाषाया एव स्वभाषात्वेन निर्देशं वयं करवाम तत्र बहून्यवन्ध्यानि कारणानि पश्यामः । यथा—( १ ) संस्कृतभाषेयं निखिलेऽपि जगत्यद्वितीया संस्कारवती भाषा ( २ ) सनातनवैदिक-धर्म-बोधकानां वेदप्रभृतिग्रंथराजानां प्राणाः ( ३ ) अद्यापि समग्रेऽपि भारते वर्षे पूर्ववत् साकल्येनावगन्तुं शक्या । वङ्ग-कर्नाटिकादिदेशभाषा न तथा सर्वत्र सर्वैर्ज्ञायन्ते । अत एव ताः केवलमुपभाषात्वेन परिगणनीयाः प्रादेशिकाः भाषाः, न तेषां मध्यात् कस्या अपि राष्ट्रभाषात्वम् । यतो न समग्रं राष्ट्रं तासु तासु अभ्यस्यमानास्वपि विज्ञातास्वपि स्वत्वबुद्धिं दधाति । सर्वजनसंवेद्याया हिंदीभाषाया विषयेऽपीदमेव । सा तु यथा कालवशात्

आङ्ग्लीभाषा व्यवहारार्थं सर्वत्राभ्यस्यते न तु स्वीयतया केनापि भारतीयेनाङ्गीक्रियते। तथेयं हिन्दीभाषा संस्कृतोद्भवा सर्वत्र व्यवहारे अनायासेन संजातप्रचुरप्रचारा एका प्रादेशिकी व्यवहारभाषैवेति निर्धारणीयम्। ये केचन सर्वसमृद्धिनिधाने राष्ट्रभाषापदे तामभिषेक्तुमभिलषन्ति ते सौवर्णेन पात्रेण कांजिकां पातु व्यवस्यन्ति। अतः सर्वभाषासाम्राज्ञी भगवती गीर्वाणवाणी एव सर्वैः भारतीयैः विशेषत आर्यधर्माभिमानिभिः शरणीकरणीयेत्यविवादम्। (४) संस्कृतभाषाया अन्यः अनितरभाषासाधारणो गुणो। नाम वैदिकधर्मस्य यथार्थज्ञानं तत्सिद्धान्तावगमश्च यद्यपि भारते वर्षे अनेकासु भाषासु धार्मिकाणां वेदप्रभृतीनां ग्रन्थानामनुवादास्तैस्तैर्विद्वद्भिः कृतो दृश्यन्ते तथापि न ते मूलग्रन्थस्य सारभूतार्थं बोधयितुं क्षमाः, किं तु चित्रवत् केवलबहिर्विभक्तिमेव यथाकथंचित् दर्शयन्ति, तत्रापि पूर्णतया तेषां सामर्थ्यं नास्ति। अतः एतादृशैः अनुवादग्रन्थैः भारतभूषणानां संस्कृतभाषामयानां ग्रन्थानां रहस्यं यथावदेव बोद्धुं कः क्षमेत? अन्यच्चेदं विमर्शनीयं भावुकमिश्रैः, यत्, वेदादीनां स्वतःप्रमाणानां ग्रन्थनामनुवादेन तत्पाठकानां मनसि यथावदर्थबोधाभावात् तत्तन्मूलग्रन्थेषु श्रद्धाहानिरपि जायेत। अनया दृशा अनुवादसरण्यापि धार्मिकाऽश्रद्धानिदानमेव भवति (५) देववाण्याः पंचमो विशेषः प्रभूता मौलिका च ग्रन्थसमृद्धिः, यः कोऽपि विषयो भवतु स भारतीयसमाजस्थितेः पोषकश्चेत् तस्य संस्कृतभाषायां ग्रन्थाः वर्तन्त एव। परं हन्त! गृहगतां कामधेनुं त्यक्त्वा परगृहे तक्रयाचनमिव पाश्चात्यमायाविमोहितान्तरङ्गाः भारतीया एव सामाजिकोपकारकज्ञानार्थमाङ्ग्लयादिभाषा एव कामयन्ते। अनया चिरकालिकयोपेक्षया संस्कृतभाषास्थं विविधविषयकं ग्रन्थभाण्डागारं किंचित् पुराणमंजूषाकपाटादौ कीटकादीनां भक्ष्यं भूत्वात्मविनाशमलभत्, किंचिच्च पश्यतोहरत्वं स्वीकृत्य परकीयैरात्मसात्कृतम्।

अनया दिशा नैकविधविषयव्यापि संस्कृतं वाङ्मयमनयैवरित्या शतवत्सरात्मकं कालं यावत्तिष्ठेत् तदा केवलं स्मरणावशेषं भवेदिति महता कष्टेन भण्यते । अतः काले एव निद्रां त्यक्त्वा सनातनवैदिकधर्मस्य रक्षणार्थं संस्कृतभाषायाः परिरक्षणोपायाः शीघ्रमेवावलंबनीयाः । ( ६ ) अन्यच्चेदमनितरासाधारण्यं संस्कृत भाषायाः, यदीयं गीर्वाणवाणी जगति विद्यमानानामविद्य- माना नां च भाषाणां जननी। अतः विमर्शे क्रियमाणे यथार्थत इयं विश्वभाषाऽपि भवितुमर्हेत् तत्र किंनाम वक्तव्यमस्या राष्ट्रभाषात्वे? कथं कारंनामेयं भाषा निखिलभाषाप्रसवित्रीति नितान्तं गभीरतरो ऽयं विषयः । पुरातत्वगवेषणाधुरंधरैः काले काले प्रपञ्चितो विस्त- रेण । अतस्तस्य साकल्येन विवेचने कृतेऽवकाशमतिक्रामेत्कदा- चिदयं लेख इति, संप्रति उद्देशमात्रेणैवालंभावं विदित्वा विषय- मिमं यथावसरं विशेषतो वर्णयिष्याम इति निवेदयामः । ( ७ ) जगति संप्रति या खलु भाषाः परिदृश्यंते ताभ्यः सकलाभ्योऽपी- यममरभारती पुरातनोति निः संशयम् । ते न भाषिकेतिहासे ऽस्या भाषासु मध्ये साम्राज्ञीपदमन्वर्थं शोभतेतराम् । अयि श्रेष्ठाः एता- दृशाः शतश असाधारणा गुणा अस्यां विद्योतन्ते, तेषां सर्वे- षामेवास्मिन् लघु लेखे अन्तर्भावस्य अशक्यत्वात् दिङ्मात्रमे- वोदाहृतम् ।

## ६ वर्धनोपायाः ।

अहो विपश्चिदपश्चिमाः! भारतसर्वस्वभूतायाः संस्कृतभाषायाः पूर्ववत् यथावत्प्रचारेणैव भारतवर्षस्य सौभाग्यसंरक्षणमन्यथा महती हानिः । एतदर्थमधः प्रदर्शिता उपायास्तत्संरक्षणायालम्भ- वेयुरितिमन्ये-तदेतेषां संस्कृतभाषासम्वर्धनोपायानां द्वेधा विभागः ( १ ) एके अचिरकालसाध्याः ( २ ) इतरे चिरकालसाध्याः । तत्र प्रथमतः अचिरकाल साध्यानां विमर्शं कुर्मः—त एव अचिरकाल

साध्या उपायाः ये झटिति सर्वत्र अवलम्बितुं क्षमाः, अविलम्बेन कार्यकराश्च । तत्र इमे उपायाः प्रथममवलम्बनीयाः—( १ ) संप्रति अखिले भारते वर्षे संस्कृतपाठशालाः, महाविद्यालयाश्च ये वर्तन्ते तेषां सर्वेषां सम्यक् परिगणनं कृत्वा अखिलभारतीयवर्णाश्रमस्वराज्यसंघेन, संस्कृतसाहित्यसंमेलनेन, भारतधर्ममहामण्डलेन, अथवा एतदर्थमेव प्रस्थापितया अखिलभारतीयया संस्कृतमहासभया सर्वेषां पाठशालानामभ्यासक्रमस्य एकमुखीकरणमेकपरीक्षानुवर्तित्वं च विधाय सर्वसंस्कृतपाठालयेषु तत्तद्गुरुभिः पाठ्यमानो विषयः संस्कृतभाषया एव पाठ्यः इति व्यवस्था विधेया । तदर्थं च ये खलु प्रत्यवायाः समुद्भवन्ति तेषां निराकरणं कर्तव्यम् । अयमेक एव उपायः शीघ्रमवलम्बितश्चेत्, संस्कृतपाठशालीयविद्यार्थिनां च पाठ्यपुस्तकानि नियोजकमहासमित्या निर्धारितानि चेत्, अल्पेनैव कालेन संस्कृतसंभाषिणो बहवो जनाः भवेयुः । ( २ ) निखिलेऽपि भारते एतादृश्यो महासभाः वर्तन्ते याः खलु केवलं संस्कृतपरीक्षाकार्यं प्रतिवर्षं निवर्तयन्ति । एतत्परीक्षासभानां संस्कृतपाठशालीयविद्यार्थिषु काले काले उदन्तनिवेदनं कर्तव्यम् । तेन संस्कृतविद्यार्थिनां मनसि परीक्षाविषयकं प्रेम संजायेत । ( ३ ) यत्र यत्र संस्कृतमहापाठशालाः वर्तन्ते तत्र तत्र प्रत्यनध्याय मेकां संस्कृतवक्तृत्वसभां विधाय तस्यां विद्यार्थिनामध्यापकानामितरेषां च संस्कृतविद्याकोविदानां कंचन नियतं विषयं पुरस्कृत्य व्याख्यानादि करणीयम् । एतेषां वक्तृत्वसभानां प्रतिवृत्तं तत्तत्प्रादेशिकसर्वविधमुखपत्रेषूद्घोषणीयम् । एतेनापि प्रयत्नेन संस्कृतभाषायां वक्तृत्वस्य परिचयो भवेत्, तेन चोद्दिश्यविषये महानुपकारः स्यात् । ( ४ ) संप्रति यानि संस्कृतभाषायां नियतकालिकानि, वृत्तपत्राणि, मासिकानि आहोस्वित्त्रैमासिकानि वा पत्राणि प्रकाश्यन्ते तेषां संस्कृतभाषारसिकेषु आंगलीयमहाविद्यालयेषु ग्रन्थागारेषु, वाचनमन्दिरेषु, देवायतनेषु च प्रचारणं तत्तत्पत्र-

ग्राहकसंख्यापरिवर्धनं च । तेन तत्तद्वृत्तपत्रसंचालकानां संस्कृत-भाषारसिकानां च महानुपकारः स्यात् । ( ५ ) निखिलभारतवर्षीयाणां संस्कृतभाषारसिकानां चरित्रसंकलनं तत्प्रकाशश्च । संस्कृत-साप्ताहिकपत्रसंचालकानां विद्वद्वृत्तप्रकाशनोपक्रमः अत्र बहूप-कुर्यात् । ( ६ ) तत्तत्प्रादेशिकभाषासु आंगलादियौरोपीयभाषासु च यन्मौलिकं वाङ्मयं ग्रन्थरूपेण सर्वत्र प्रशंसाभाजनं भवति तस्या-विकलाः संस्कृतभाषामयाः मधुरमधुराः अनुवादाः करणीयाः । श्रान्तजनमनोविनोदनहेतूनि लघुकथामहाकथालक्षाणि नव-नवानि रूपांतरितानि संस्कृतपुस्तकानि संस्कृतभाषाकोविदाः लभे-रंस्तर्हि परंप्रमोदमुपयास्यन्ति । एतादृशानां पुस्तकानां मूल्यमपि प्रचारहेतोः स्वल्पं स्वल्पं ग्राह्यम् इति ।

अथाऽधुना चिरकालसाध्यानां प्रयत्नानां दिशं दर्शयामः । तत्र ( ७ ) यथा सर्वत्र भारते वर्षे राजकीयव्ययेन नगरपालिकव्य-येन वा प्राथमिकाः पाठशालाः उर्दूपाठशाला वा संचाल्यन्ते तथा राजकीयव्ययेनैव प्रतिग्राममेका संस्कृतपाठशाला बालकानां कृते स्थापनीया । भारते वर्षे सनातनवैदिकधर्मानुयायि बहुले देशे इदं सुसंपादमिति मन्ये । ( ८ ) भारतवर्षान्तर्गते प्रतिप्रान्ते तत्तद्रा-जकीयमण्डलेन संस्कृतविश्वविद्यालयो विनिर्मातव्यः तद्द्वारा स्थाने स्थाने संस्कृतमहाविद्यालयाः, संस्कृतोपाधिपरीक्षाणां प्रबन्धश्च विधेयः ( ९ ) संस्कृतमहाविद्यालयाध्यापकैरांगलभाषां सम्यक्पठित्वा तद्गतानि रहस्यानि विज्ञाय सर्वोत्तमया सरण्या संस्कृतभाषायाः पाठनं कर्तव्यम् । हन्त ! महदिदं कष्टमापतितं यदिदानीन्तना आङ्गलभाषाकोविदाः संस्कृतभाषापाण्डित्यार्थं यौरोपीयदेशं शरणीकृत्य ततः पी० एच० डी० इत्यादि पदवीं सम्पाद्य भारतवर्षे सर्वत्र महतीं योग्यतां लभन्ते गण्यन्ते च एता-दृशा महाभागाः अतितरां श्रेष्ठाः । संस्कृतभाषाविषये तेषामेव वचः

प्रमाणं मन्यतेऽधिकारिपुरुषैः। वस्तुतस्तु विचार्यमाणो संस्कृतविद्वत्ताविषये अन्तर्विद्यमाना का स्थितिरिति सर्वे संस्कृतपण्डिता जानन्त्येव। अतो भारतभूलांछनमिदमेषा प्रणालिस्त्वरयैव परावर्त्य यौरोपीयाः पण्डिताः संस्कृतभाषानैपुण्यसम्पादनार्थं शतशो भारते वर्षे यथा आगच्छन्ति, अङ्गिकुर्वन्ति च ते यथा संस्कृतभाषाविषये भारतवर्षस्थानां पण्डितानामेव शिष्यत्वम् तथा प्रयत्नो विधेयः।

( १० ) आ च सेतोः आ च हिमाचलं सर्वत्र धार्मिकव्यवहारकर्तृभिः पुरोहितैः संस्कृतभाषामज्ञात्वा याज्ञिकव्यवहारा न करणीयाः किं तु प्रथमतः संस्कृतभाषां यथावत् पठित्वानन्तरमेव पौरोहित्यवृत्तिः स्वीकर्तव्या। एतदर्थमुपरिवर्णितया नियामकसंस्कृतमहासभया सकलाः पुरोहिताः तथा ज्ञापनीयाः, तद्विषये साहाय्यं च कर्तव्यम्। अयि महाभागाः संस्कृतपाठकाः एतादृशाः संस्कृतभाषासंवर्धने नैकश उपायाः सन्ति। तेषां यथावदवलम्बनेन संस्कृतभाषा अचिरेणैव कालेन यथार्थतया राष्ट्रभाषा भवेदिति दृढोऽस्माकं विश्वासः।

## ७ उपसंहारः।

एवमादिविचार्यमाणो संस्कृतमेव राष्ट्रभाषा इति निश्चयचोऽयं सिद्धान्तः। अतो भारतभूषणायमानैः सनातनवैदिकधर्मानुयायिभिस्तदितरैश्च भारतवर्षनिवासिभिरियं सर्वभाषाजननी पुरातनी भाषासम्राज्ञी द्रागेव यथा पूर्वतनेन भाग्येन पुनरपि समुत्कर्षपदं लभेत तथा प्रयत्नोऽनुष्ठीयतामिति साञ्जलिबन्धा सप्रश्रया च भूयो २ विज्ञाप्तिः। श्रीमत्पण्डितप्रवरैः संस्कृतसाप्ताहिकपत्रसम्पादकैर्बलात्प्रेरितो वयमस्मिन्विषये ऽस्मदीयान्विचारान्यदलिखाम ते-संस्कृतभाषोद्धारे कृतप्रयत्नैः सुधीभिर्विमृश्यताम् इति संप्रार्थ्य विरमामः।

# आर्यसभ्यता ।

( ले० डा० पं० कुलभूषणः डी० पी० एच० (लण्डन) सम्पादकः "श्रीः" श्रीनगरम् । )



केयमार्यसभ्यता । आर्याणां श्रेष्ठानां सभ्यपुरुषाणां सामाजिकराजनैतिकशारीरिकात्मिकजीवनपरिस्थितिरार्यसभ्यता—शब्देन निगद्यते । यद्वा सृष्टिसर्गकालादारभ्य भारतवर्षीयाणामार्याणां सामाजिकजीवनमिति आर्यसभ्यता । यतः पाश्चात्यानां मते मध्येशियाप्रान्तेषु जातायां सृष्ट्युत्पत्तौ प्राचीनार्याणां विभागाः संजाताः । कैश्चित् पोरसीकादिषु गत्वा न्युषिता अन्ये योरपदेशविशेषेषु गता, अपरे च हिन्दुकुशपर्वताद् दक्षिणं भारतवर्षमागत्यार्यावर्तनाम्ना प्रख्यातं देशमलञ्चक्रुः । यद्यपि पाश्चात्यानां राद्धान्ते सर्वे उपरिलिखितदेशनिवासिन आर्यशब्देन गृह्यन्ते तथापि विशेषतो भारतवर्षे आर्यशब्दः भारतभूमिमलङ्कुर्वाणानामार्याणां नाम्न्येव प्रयुक्तः । अतोऽत्रार्यशब्दस्यायमेवाभिप्रायः । यद्वार्यशब्दः वैदिकधर्मावलम्बिनामार्याणां नाम्नि एव प्रयुज्यते । तेषामेव सभ्यतात्र आर्यसभ्यता इति ।

## किंकालीना सभ्यता।

इदानीमार्यसभ्यता प्रकाशकाले एकोऽन्य आवश्यकः प्रश्नः समाधेयः।, नन्वतिप्राचीनेयं सभ्यता! कथं भवद्भिरेषा बहुकालीना सभ्यता एकेन समयेनावलम्ब्य प्रकाशयितुं शक्यते?। वैदिककालादारभ्याद्यपर्यन्तं लक्षसहस्रवर्षाण्यतीताः। किंकालीना सभ्यता भवद्भिः स्ववचनैः स्वलेखे गृह्यत इति कथयेत?। लेखस्यास्याभिप्रायः प्रायशः तां सभ्यतां वर्णयितुमस्ति यामाधुनिकाः पाश्चात्यदेशीयैतिहासिकाः प्रमाणपथारूढां निर्णयात्मिकां मन्यन्ते। कतिपयवर्षाण्यतीताः पाश्चात्यानां भारतीयसभ्यतायाः लघुतरं ज्ञानमासीत्। तेषां मत आर्यावर्तस्य गणना यद्यपि ख्रिष्टसमयात् (ईशा कालात्) प्राचीनाऽऽसीत् तथापि तस्मात् पूर्वमार्याणां कर्माणि सामाजिकपरिस्थितिश्च नव्यमानवमनसां नवशिक्षित-भारतयुवकानां आह्लादकरी उत्साहजनका च नासीत। इदानीमपि ख्रिष्टाब्दात् सहस्रवर्षं पूर्वं यत् किञ्चिदत्र भारतवर्षे समभूत् तन्मते सर्व्वं प्रमाणयुक्तञ्च न दृश्यत इव। परन्तु ततः प्राक् महाभारतसमयस्य वृत्तान्तं रामचरित्रं उपनिषत् ब्राह्मणग्रन्थकालः वेदसमयश्च न सर्वथा माननीयः प्रमाणयुक्तश्च स्वीकर्तव्य इति कथयन्ति अमी महानुभावाः।

अस्माभिः प्रतिज्ञातं यत् पाश्चात्यानां मते यावानप्रमाणयुक्तेतिहासो दृश्यते तावानेवायं वर्ण्यते। अतो वैदिककालादारभ्य ख्रिष्टाब्दात् सहस्रवर्षपूर्वं समासत एवार्यसभ्यतायाः चिह्नानि वर्ण्यन्ते। अन्यच्च सृष्ट्युत्पत्तेः स्थानकालयोरपि महान् भेदः परस्परमार्याणां पाश्चात्यानाञ्च सिद्धान्तेषु वरीवर्ति। आर्याणां मते उत्तरभारतवर्षे ऽथवा त्रिविष्टपप्रदेशे उत्पत्तिस्थानमासीत् परन्तु पाश्चात्यानां मते मध्येसिया मध्य इति।

## सृष्टेरायुः ।

सृष्टेरायुः पाश्चात्या अपि कतिपयकोट्यु त्तरमर्बुद परिमितं मन्यन्ते । आर्यमतावपि षण्णवतितोऽप्यधिको ऽर्बुदमितः अस्याः प्रारम्भकालोऽस्ति । वैदिककाले आर्यसिद्धान्तानु सारेण सर्वत्र वैदिकसभ्यताया आविर्भावो बभूव । वैदिकशिक्षा सर्वदा मानवान् मोक्षप्रदायेषु यज्ञकर्मसुनियोजयति । विषय वेद-मन्त्रेऽन्यानि कानिचन प्रमाणानि न विद्यन्ते येभ्यः तत्कालीना सभ्यता व्याख्यायेत । परञ्च वेदमन्त्रेभ्य एव सम्यक् सर्वं ज्ञातुं शक्यते यतो मनुष्याः परमात्मानमेकं लक्ष्यीकृत्य सर्वंधिगृहकार्याणि सामाजिकात्मिकक्रियाविशेषाणि च चक्रुः । यथा च वेदे—

ॐ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत् । सदाधार पृथवीं द्यामुतेकां कस्मै देवाय हविषा विधेम ।

ब्राह्मणग्रन्थसमयस्य वृत्तमाधिक्येन दृष्टिगोचरं भवति । प्रमाणं त्वत्रापि ग्रन्थानामान्तरीयोन्नेयं न तु पुस्तकलिखित इतिहासः । या सभ्यता कोटिलक्षसहस्रवर्षीया प्राचीना संसारे ऽस्मिन् आधुनिके काले ऽपि दरीदृश्यते यानाक्रान्तुं बह्वोऽन्याः सभ्यताः प्रादुर्बभूवुः । यस्या ग्रन्थराशयः क्रूरतागर्वसंयुतैः जयम-दान्धैः पुरुषैर्भस्मसात् कृताः स्युः कालप्रभावात् वा यस्य मन्दिराणि शिलालेखा नगराणि वनानि आकृत्या परिवर्तितानि स्युः कथं तस्याः पुरुषकृतग्रन्थाः सुरक्षिताः भवेयुः ? आश्चर्यं त्विदं यदिदानीमपि चत्वारो वेदाः केचन ब्राह्मणग्रन्था उपनिषदः स्मृतयः, रामायणमहा-भारतप्रभृतय इतिहासग्रन्थाः पुराणेतिहासपुस्तकानि अन्यानि च बहूनि राज्यनीतिविषयकाणि आयुर्वेदकलाकौशलादीनि भारत वर्षे विद्यन्ते ।

# संस्कृतवाङ्मये विदुषीणां स्थानम्

( ले० गलगलीरामाचार्यः मधुरवाणी-सम्पादकः वेलगांव )






गवती गैर्वाणी वाणी गुणतोऽनणीयसी शब्दतो ज्यायसी अर्थतो गरीयसी महिमतो महीयसी भावतो भूयसी अलङ्कारतो वरीयसी सुधाशनानामपि प्रेयसी सुधातोऽपि स्वादीयसी सर्वभाषातः साधीयसी चेति विदितमेव विश्वेषां विदुषाम्। यद्गतं ध्वनिमास्वाद्य धिक्करोति सुरांगना मञ्जुलध्वनिमपि वाङ्मयाध्वनीनः। यत्र विस्फुरतोऽलङ्कारानवलोक्य पुनर्नावलोकयति मणिमयानलङ्कारान्। यत्र मृदुमंजुलपद-शय्यायां शयने विस्मरत्येव स्मरस्मेरविलासिनीसनाथां हंसतूलशय्यामपि। यत्र कृतार्थीकुर्वतश्चार्थानासाद्य नार्थयते रसिकः पुमर्थान्। यत्र विहितद्राक्षारसवैधुर्यं माधुर्यं पायंपायं अवधीरयति स्ववधूबिम्बाधरसुधारसं सहृदयः। तामिमां भाषां भगवान् पाणिनिमुनिः सिषेवे। पतञ्जलिमंजुलं जगौ। कात्यायनोऽपि कात्यायनीमिव भृत्यायितः परिचचार प्रेम्णा। अक्षपादः पक्षपातमस्यां दर्शयामास कणादोऽस्यरसकणानास्वादयन्नन्वर्थीचकार निजनामधेयम्। भारतोऽस्या गुणभारेण प्रमोदभरितो बभूव। नाभिजन्मा-

वतारो वल्मीकजन्माऽपि रामायणरसायनदानेनातोषयदिमाम्। भगवान्पुण्डरीकाक्षोऽपि व्यासरूपेणावतीर्णो धरणीमण्डले सरस-भारतहारेणाभूषयदेनाम्। एवमन्येऽपि शतमन्युप्रमुखा बर्हिर्मुखा नाकलोके विहितशुश्रूषाविशेषात्तृप्तमानसा वसुधातलमुपेत्य विविधग्रन्थमणीनर्पयन्तोऽनया सुधाशनाधिकसुखमासादयामासुः। ईदृशाया असदृशायास्त्रिदशभारत्या महिमानमपारं को वा शक्नोति वाचः पदमुप नेतुम्। को वा पारयति मानसपथमुपारोपयितुम्। को वा चेष्टेत श्रवणसरणिमुपसारयितुम्। को वा समर्थः स्यादालोडयितुम्। को वा क्षमते लेखनविषयतां प्रापयितुं कृच्छ्रादपि। यथेमामनादिकालादारभ्य वशिष्ठविश्वामित्राद्यो मन्त्रद्रष्टार ऋषय उपासां चक्रिरे, कृष्णद्वैपायनाद्यो मुनिपुङ्गवाः पूजयामासुः कालीदासप्रमुखाः कविकुलललामाः कलयामासुः तथा सपर्यामस्याः नैकशः कांतामणयोऽपि निसर्गकान्तामध्येनां सुरसरस्वती माकंदमकरंदनिस्स्यंदिन्याऽरविंदमिलन्मिलिंदया निन्दितमंदाकिनीस्रोतसा नन्दिवृन्दारकवृन्दारकथा स्पन्दितविषयाभिलाषप्रसरया क्रन्दितमन्दाररसश्रिया सरसवचोवैखर्या परिचर्याविधिना विदधुः प्रमोदभरमेदुराम्। तासु सीमन्तिनीषु वेदेषु विश्रुतानां विदुषीणां हृतदुरितं चरितं वाचकमहाशयेभ्य उपहारीकर्तुमभिलषामः साम्प्रतम्।

ऋग्वेदस्य प्रथममण्डले मन्त्रद्रष्ट्री रोमशा नाम ब्रह्मवादिनी श्रूयते। सा खलु भावयव्येन मुनिना समं संवदन्ती गहनविषयेष्वपि गाधेतरमात्मनो वैदुष्यमाविष्करोति। तथा साध्वी कुलललामाकृतदोषलोपा ज्ञानगभीरमुद्रा लोपामुद्रा पीतांभोधिना कुंभसंभवेन वल्लभेन सह सम्वादेनात्मनो विसम्वादां निदर्शयति विद्वत्तामनियत्ताम्।

ऋग्वेदस्य अष्टममण्डले शश्वती नाम शाश्वतकीर्तिभासुरा भूसुरांगना मन्त्रद्रष्टृत्वेन विश्रुता। या किल देवताशापेन क्लीब-

तामुपगतस्य पत्युरवस्थयो खिन्ना महतस्तपसः प्रभावेण पौरुषं प्रापयामास तं। तृतीयाप्रकृतितामुक्तप्रकृतिं पतिं निशाम्य प्रसन्नतरा शश्वती स्तौति प्रमोदभरेण। अपरा अपालानाम काचन-महिला प्रथिता। अत्रिमुनितनयेयमपाला ब्रह्मज्ञानिनी। श्वित्रिणीति परित्यक्ता बल्लभेनोवास पितृवेश्मनि। तस्याश्रमे चिरं तपस्तेपे पुरन्दरमुद्दिश्य। तीव्रतरतपःप्रसन्नं पुरुहूतं वरत्रयमयाचत। पितुः शिरसः खल्वाटतापसरणं सस्याभिवृद्धिमात्मनो रोगपरिहारं च। सम्पन्नमनोरथा सेयमपाला बभूव भास्वत्करसंततिरिव तेजस्विनी। ऋग्वेदस्य नवममण्डले शिखण्डिनी नामधेये कश्यपदुहितरौ मन्त्रदर्शिततया प्रतीयेते। पवमानसोममुष्णिक्छन्दसा यायन्त्यौ इमे पांडित्यमात्मीयमसाधारणं प्रकटयतः।

ऋग्वेदस्य दशममण्डले यमयमीसंवादो हि हृदयंगमया भंग्या सहसा वशीकरोति मानसानि सहृदयानाम्। उपमारुचिरो नीतिप्रचुरोऽयं संवादः सत्यं क्षणमानंदपारावारे निमज्जयति पठितारम्। माननीया मानिनी यमी न केवलं यमं निजनियमायत्तमातेने किंतु निखिलं विद्वत्समाजं पटुतरया वचनपरिपाट्या। कक्षीवतः कन्या घोषा योषा कुलभूषा जोघुष्यते वेदेन मन्त्रदर्शिनीति। इयं हि सती नासत्यौ स्तवीति विविधैः प्रकारै रुचिरतरया रीत्या। तथा वरुण पत्नी शचीपतिं मधुरया वाक्सरण्या नौति। आम्नायेषु पुरूरव उर्वशीसंवादः सर्वत्र प्रथित एव। यं श्रुत्वा निर्भरमानन्दमनुभवति भावुको जनः। प्रजापतिकन्या दक्षिणा नाम वामेक्षणाऽपि वेदप्रथितवैदुष्येणादृष्येण तोषयत्यशेषान्। जुहूर्नाम्नी ब्रह्मवादिनी बृहस्पतिभामिनी जेगीयते आगमेन कामगोत्रजा श्रद्धा ब्रह्मवादिनी च गोधा कस्य वा न मनसि श्रद्धामादध्याताम्।

विश्ववाराभिधाना अत्रिकुलोत्पन्ना ललना पञ्चममंडले

अष्टाविंशसूक्तद्रष्ट्री अधुनातनवधूनां नवीनामेव विशिनष्टि दृष्टिम्। तृतीयामृचि भगवंतं हव्यवाहनं स्तुवाना दाम्पत्यमस्मदीमविच्छिन्नं विधेहीति याचमाना जगति विकिरति दिव्यमुपदेशामृतम्। जीवति धवे घटस्फोटं मृते च पुनर्विवाहमन्विच्छतीनामिदानींतनानां वनितानामयमुपदेशो यद्यपि कटुकालकूटोपम एव तथाऽपि परिणामेऽमृतायमान इति नैव विविस्मरणीयं ताभिर्मदोद्धताभिः। प्रियपाठकमहाभागा इयदवधि वेदेषु विदुषीणां स्थानं कीदृशमासीदिति समासतो न्यरूपि मया। एतेन सुकरमेवेदं ज्ञातुं यत्पुरातनकाले कमलेक्षणा अपि न केवलं सुशिक्षिता आसन्नपितु गहनविषयेष्वपि प्रगल्भतमा इति। वेदेषु ताभिर्दृष्टमन्त्राणामर्थावधारणे सकलशास्त्रपारंगतोऽपि साधु न क्षमते किं पुनः साधारणो जनः। तासामुपमाकौशलमवलोक्य विस्मयेन स्तिमितं भवति मनः, कराङ्गुलिः स्वयमेव विशति वदनम्। स्तवप्रकारमन्वीक्ष्य द्रवति हृदयमास्माकीनं किं पुनः स्तुत्यानां देवतानाम्। सरला वर्णनशैली, गभीरो भावः रुचिरा कल्पनाचातुरी, हृदयहारिणी चोपदेशसरणिः, अविच्छिन्ना वाग्झरी शर्करावगुण्ठितौषधिरिव सरसकवनान्तर्हित गूढतत्व—चारुनीतिसदुपदेशवैखरी महाविचारपरिपाटी निसर्गसौन्दर्याकलनरीतिः सृष्टिशोभातन्मयता वृत्तिश्चेत्येवमादयो गुणा हठादेवाकर्षन्ति चेतांसि परिशीलयितॄणाम्। तासां सूक्तानि प्रत्याययन्त्युदारां मनोवृत्तिं पुरातनपुरन्ध्रीणाम्। पतिपरायणानां तासां गृहिणीनां चरितमुदात्ततरं प्रतिक्षणं परिवर्तनसापेक्षं निजानुकूलमेव धर्मं मन्यमानानां मानिनीनामादर्शभूतं विद्योतते।

एवमुपनिषत्स्वपि श्रूयते वैदुष्यप्रथिता योषिद्वराः गार्गी वा चक्नवी वडवाप्रातिथेयीप्रभृतयः याः किलाधुनाऽपि प्रत्यहं ब्रह्मयज्ञकाले तर्पणव्याजेन स्मर्यन्ते द्विजातिभिः। याज्ञवल्क्यं प्रति गार्गीकृतप्रश्नो हि तस्या महतीं विद्वत्तां विद्योतयति। तथा याज्ञवल्क्यभार्ययोरन्यतरा मैत्रेयी तृणीकृतधरणीद्रविणादिका ज्ञाने

कपिपासाकुला तमनिधिं दयितं प्रति विविधप्रश्नैः प्रगल्भतरै रात्मीयामध्यात्मविद्याप्रवणतां निपुणतरं निरूपयति । एवमितराः स्वल्पेतराः कातराक्ष्यो नितरां विद्याचातुरीका विभ्राजतेऽधुना-ऽपि वेदविहायसि तारायमाणाः पुराणकालेऽपि सीतासावित्री दमयन्तीद्रौपदीप्रमुखा वरवर्णिन्यो वर्णनीयवैदुष्यगुणा आसन्निति रामायणमहाभारतादिपुराणपठनेन स्पष्टमवगम्यते रामायणे अयोध्यावर्णनावसरे,

'द्रष्टुं शक्यमयोध्यायां नाविद्वान्न च नास्तिकः ।'
'नासूयको न वाऽशक्तो नाविद्वान्विद्यते तदा ॥'

इति सर्वेषामयोध्यानिवासिनांस्त्रीपुरुषाणां वैदुष्यमुद्घोषि-तम् । अत्र पुंल्लिङ्ग वाचकविद्वच्छब्देन केवलं पुरुषा एव वेत्तारो बभूवुरयोध्यायां न योषा इति केचिदाशेरते । तथा सति पुंल्लिङ्ग-बोधकनास्तिकपदेन केवलं नरा एवास्तिका नार्यस्तु नास्तिका इत्यर्थस्वीकारापत्तिः । अतः स्त्रीपुरुषसाधारण्येन वैदुष्यास्ति-क्यादयो भगवतो वाल्मीकिमुनेरभिमता इत्यवश्यमभ्युपेयमेव । भारतकाले तु संस्कृतमेव राष्ट्रभाषापदमभजदिति विचिकित्सकाना-मपि आधुनिकबुधानामभिमतम् । सकलशब्दाकरे भारते च प्राकृतभाषाया नामाऽपि न श्रूयते । अतः सुकरमिदमनुमातुं यत्तदा केवलं संस्कृतभाषैव व्यवहारिकी बभूव । किं च पंचांबु ( पञ्जाब ) देशचंचलाक्षीवर्णनावसरे कर्णेन ।

"आहुरन्योन्यसूक्तानि प्रब्रुवाणा मदोत्कटाः ॥
हे हते हते त्वेवं स्वाभिभर्तृ हतेति च ॥"

इति तद्देशीयानां सारसदृशामाक्रोशवचनरीतिरुपवर्णिता । तेनावबुध्यते तदा वधूजनोऽपि विबुधभाषयैव व्यवहरन्ति स्मेति । वनपर्वणि 'प्रिया च दर्शनीया च पण्डिता च पतिव्रता'

इति पांचाली पण्डितेति श्लाघिता । तथा विदुलायाः स्वतनयं प्रति वीरावेशसमुत्तेजकं नैकराजनीतिसमुद्बोधकं वचस्तस्या वीरवृत्तिमिव बुद्धिमत्तामपि विशदं व्यनक्ति । अतो भारतकालेऽपि भामाजनाः प्रतिभाशालिनो बभूवुरिति सिद्धम् । पुराणकालादर्वाक्तनेऽपि काले विपुला विराजन्ति स्म सरोजलोचनाः । श्रीशंकराचार्यं मंडनमिश्रकुटुम्बिन्योः संवादकथा कस्य वा न श्रुतिपथमुपागता । तदानीं किल न केवलमिलामरमहिला एव सुरवाणीकुशला ।अवर्तन्त परं दासीजना अपि । मंडनमिश्रमन्दिरं विचिन्वतां श्रीशङ्कराचार्याणां दासीजनोत्तरचातुरी जरीहरीति चेतोऽरसिकानामपीतितदुदाहरिष्यामः किंचित् ।

"गच्छन्नसौ मंडनपंडितौको दासीस्तदीयाः स ददर्श मार्गे ।
कुत्रालयो मंडनपंडितस्येत्येताः स पप्रच्छ जलाय गंत्रीः ॥"
ताश्चाऽपि दृष्ट्वाऽद्भुतशङ्करं तं सन्तोषयंत्यो ददुरुत्तरं स्म ।
'स्वतः प्रमाणं परतः प्रमाणं कीराङ्गना यत्र गिरं गिरंति ।
द्वारस्थनीडान्तरसन्निरुद्धा जानीहि तन्मण्डनपण्डितौकः ॥'

वाचकवरेण्या उदाहृतश्लोकैरेतैः गैर्वाणीवाण्या रमणी स्वभ्यनणीयसी प्रभुता स्फुटमभिज्ञायते । तथा मंडनमिश्रमानिन्याः शारदायां सर्वशास्त्रविशारदता वादप्रगल्भता सरसवचः प्रौढिमा च विस्मापयत्यमरानपि । तात्कालिकीं परिस्थितिं निपुणतरं वर्णयन्ति विद्यारण्यस्वामिनः । श्रीशङ्कराचार्या विवादसमुत्सुकामाध्यस्थ्याय मंडनमिश्रमेवमाहुः ।

'विधाय भार्यां विदुषीं सदस्यां विधीयतां वादकथा सुधीन्द्राः ।'

श्रीशङ्कराचार्येभ्योऽपि विदुषीपदवीभाजो भामिन्याः वैदुष्यं कीदृशमिति स्वयमेव विचारणीयं वाचकविचक्षणैश्चेतसि । ततः शारदासाक्षितया प्रवृत्ते महती वादकथा ।

ततः समादिश्य सदस्यतायां सधर्मिणीं मंडनपंडितोऽपि ।
स शारदां नाम समस्तविद्या विशारदां वादसमुत्सुकोऽभूत् ॥'

इति श्लोकेन शारदायाः सकलविद्याविशारदत्वं वर्णितम् । ततो वादे विजितमण्डनं यतिमंडनं विलोक्य पंडावदमेसरा शारदा साभिमानमावेदयति ।

'अपि तु त्वयाऽद्य न समग्रजितः प्रथिताग्रणीर्मम पतिर्यदहम् ।
वपुरर्धमस्य न जिता मतिमन्नपि मां विजित्य कुरुशिष्यमिमम् ॥'
'तदपि त्वयैव सह वादकृते हृदयं बिभर्ति मम तूत्कलिकाम् ।

तदा किल वनिता जनेन समं वादो विजयेऽपजयेऽपि न मतिमतां श्रेयस्कर इति वादिनः श्रीशङ्कराचार्यानुद्दिश्य शारदायाः सोदाहरणा प्रतिवचनचातुरी तुषाराङ्शुरोरपि तनोति चेतश्चमत्कृतिम् । शारदाया इदं वचः ।

'स्वमतं प्रभेत्तुमिह यो यतते स वधूजनोऽस्तु यदि वास्त्वितरः ।
यतितव्यमेव खलु तस्य जये निजपक्षरक्षणपरैर्भगवन् ॥'
अतएव गार्ग्यभिधया कलहं सह याज्ञवल्क्यमुनिराडकरोत् ।
जनकस्तथा सुलभयाऽबलया किममी भवन्ति न यशोनिधयः ॥
इति ततः
'मतिचातुरीरचितशब्दझरी श्रुतिविस्मयीकृतविचक्षणयोः ।
इति जल्पतोः सममनल्पधियोर्दिवसाश्च सप्तदशचाप्यगमन् ॥'

इति मतप्रवर्तकैरपि समं बहुतिथो वादोऽजनि शारदायाः सरसवाग्झरीमेदुरोदर्शितमतिचातुरीभरो विचक्षणविस्मयकरः । तदनेनाऽस्या निरूपमं पांडित्यमासामान्यं धैर्यं विलक्षणयुक्ति जटिला वचनपरिपाटी सहृदयमानसवाटीमाटीकमाना पुष्णाति परां कोटिमानंदस्य ।

कविकालेऽप्यनल्पा ललनाः प्राज्ञतामात्मनः प्रदर्शयामासुः । कविकुलतिलकः कालिदासः श्रुतबोधनामके वृत्तलक्षणग्रन्थे कामिनीमेव संबोध्य कथयति वृत्तलक्षणानि । तेन ज्ञायते सा प्रेयसी साहित्यकलाकोविदेति । अन्यथा मूढतमां भामामुद्दिश्य रसिकाग्रणीः कालिदासः सरससरलैः संबोधनैर्वृत्त-लक्षणानि निवेद्यात्मनः प्रदर्शयेदकौशलम् । एवं लोलिम्बराजो नाम वैद्यराजो ( न तु यमराजसहोदरः ) स्वविरचिते वैद्यकग्रन्थेऽनवद्याङ्गीमुद्दिश्यैव रोगलक्षणनिदानचिकित्सादीन्यायुर्वेदप्रमेयाणि साधुमुपदिशति । तत्रत्यानि सरसानि संबोधनानि निरुपमा उपमादयश्च सीमंतिन्या रसिकतां साहित्यकलाकोविदतां च ख्यापयन्ति स्फुटतरम् । यथा विज्जका-शीलाभट्टारिका इन्दुलेखा-मारुला-नागमा-मोरिका-फल्गुहस्तिनी-मधुरवाणीत्यादयो दयिताः सरसकविताजनन्यो भारतवसुधामिमामलंचक्रुः । गीतगोविन्दकर्तुर्जयदेवस्य पाणिगृहीती पातिव्रत्यसद्मा वदनजितपद्मा पद्मावती विद्यावती विद्यते स्मेति

"वाग्देवताचरणचित्रितचित्तवृत्तिः,

पद्मावतीचरणचारणचक्रवर्ती" ॥ इति वाग्देवताचरण-चित्रितचित्तवृत्तेरात्मनः पद्मावतीचरणचारणचक्रवर्तित्वमावेदयता जयदेवेन कुशलया वचोभंग्यान्यरूपि निस्संकोचम् ।

भवभूतिरपि उत्तररामचरिते आत्रेयी वनदेवतासंवादमिषेणात्मनः समये विदुषीणामवस्थानमवगमयति । प्रायः कवयः स्वानुभूतान्येव वस्तूनि समुल्लिखन्ति काव्येषु नाटकेषु वा केनाऽपि प्रकारेणेति विदितमेव सर्वैरिदम् । कर्णाटकदेशे विजयनगरसाम्राज्यावसरे राजमहिष्या गङ्गादेव्या निजवल्लभस्य कंपराजस्य

विजययात्रावर्णनपरं काव्यं 'वीरकंपचरिताभिधानं' व्यधायि रस-निधानम् । यदवलोक्य किमिदं कालिदासकृतमिति संदेग्धि मनः।

आस्तामियं पूर्वकथा । सांप्रतमपि विज्ञानैकनिलये भारतेऽस्मिन्भवेयुरेव सुरभाषाकुशलाः कुशेशयलोचनाः। परं ता अविदितनामधेया अप्रकाशितनिजमतिवैभवा इति विषीदतिचेतः। काशी-कलकत्ता-वडोद-पुण्यपत्तनादिषु प्रतिवर्षं संस्कृतपरीक्षा केन्द्रेषु साहित्यादिविषयेषु समुत्तीर्णा आकर्ण्यन्ते हरिणीदृशः। परं ता लेखनादिव्यवसायेन सुरभारतीं परिचरितुं न पुरस्सरन्ती त्यहो दौर्भाग्यमस्माकम् । यदो किल पंकजदृशः सुरपंकजासन सुन्दरी सेवने बद्धकंकणाः स्युस्तदा नातिदूरा सुरभाषासमुन्नतिः। न चेदितरः प्रयासो न फलेग्रहिः स्यादिति मे मतिः। सुरभाषया व्यवहरन्त्योरेव दंपत्योस्तदीया संततिरपि कलभाषणं सुरगिरैव स्वभावतः कर्तुं प्रभवन्तीति जानीयुरेवसर्वे।एवं सत्यमचिरादेव संस्कृतभाषा राष्ट्रभाषापदमध्यारोढुमीष्टे नान्यथा। अतो दैवतवाचः समुन्नतिमीहमानैः प्रथममिदमेव विधेयं यत् स्वगृहे दुहितरः स्वसारश्च संस्कृतमध्यापनीयाः। अधीतसंस्कृतास्ताः संस्कृत प्राज्ञेभ्य एव वरेभ्यो देयाः । प्राज्ञदंपतीसंभवा संततिरपि प्रायो प्राज्ञैवेति नियमो नैव व्यभिचारयन्त्यात्मानमितिविचारणीयस्तदनु कृतिविषयतां नेतव्योऽयमंशो यदि रुचितः स्यात् । सांप्रतमपि प्रकाण्डपाण्डित्यकृतविद्वज्जनमनस्तोषा विदुष्योऽवलोकयन्त्य एव यत्र तत्र।

एतादृशः सुदृशो यदि पुरस्सरन्त्यो निजवैदुष्यं प्रादुष्कुर्यु-स्तर्हि नूनमचिरादेव पूर्ववदेव प्रतिसद्म सुरसरस्वती सानन्दं नरीन-र्तीति बलीयान्नः प्रत्ययः। भगवान्गोपीजनवल्लभो गोविन्दस्तादृशीं धिषणामनुगृह्णातु कुशेशयदृशामिति सम्प्रार्थ्य सम्प्रति लेखन्या समं विश्रामयामो वयमात्मानमादत्तवाचकमहाशयानुज्ञाः ।

# संस्कृतं राष्ट्रभाषा ।

(ले० साहित्यमनीषी विनीतः भवानीछापर, गोरखपुर)

साम्राज्येऽसम्यताया, नय–निगम–कला–शिल्प–सम्पर्क–शून्ये,
संसारे, शिक्षयादौ तनय इव यया शिक्षिताः सर्व–देशाः ।
ते नैवाऽसप्रतिष्ठा दिशि दिशि, जगतः शिक्षयित्रीयमाद्या,
धन्या गीर्वाणवाणी भवतु भुवि भुवः श्रेयसे राष्ट्रभाषा ॥
अंशं यस्या गभीरादतुलित– वितते: शब्द–रत्नाम्बुराशेः–
किञ्चित् किञ्चित् गृहीत्वा जगति गुरुपदं प्रान्तभाषा भजन्ते ।
सेयं पुण्या शरण्या सकल–जन–मनोहारिणी सर्व–भाषा —
साम्राज्ञी संस्कृता गीर्भवतु भुवि पुना राष्ट्रभाषाऽसनस्था ॥
उद्भूतिः स्यान्मृतिः स्यादुपनयनविधिः स्यादुताहो विवाहः–
पित्र्यं वा दैवतं स्यादथ जपतपसी यन्त्र–मन्त्रेऽथवा स्ताम् ।
कर्माऽल्पीयोऽपि कर्तुं क्षणमपि पुरुषा यद्विना न क्षमन्ते —
तत्सर्वत्रोपयुक्तं भवतु भुवि पुनः संस्कृतं राष्ट्रभाषा ॥
जाताऽस्येभ्यश्चतुर्भ्यः प्रथममिह विधेर्देवताभिः प्रयुक्ता–
वाल्मीकि–व्यास–भास–प्रमुख–कविवरैर्वर्द्धिता संस्कृता च ।
देश्यैर्वैदेशिकैर्वा सपदि सविनयं सेव्यमाना समन्ता–
देषा नः संस्कृता गीर्भवतु विजयिनी राष्ट्रभाषाऽसनस्था ॥
अध्यात्म ज्ञान-गेहं स्मृति–ललितकला–वल्लरी- वाटिकाभू–
र्विद्यानामादिवीजं कवि–कुमुद–विधुर्विश्व–साहित्य–सम्पत् ।
देशस्यास्य प्रतिष्ठाऽगम–निगमनिधिर्गौरवं चाऽर्य्यजातेः–
श्रीशस्याशु प्रसादाद्भुवि भवतु पुनः संस्कृतं राष्ट्रभाषा ॥

# संस्कृतभाषा राष्ट्रभाषा कथं भवेत् ।

( वे० पं० घुलीं श्रीनिवासाचार्यः सहसम्पादकः—
मधुरवाणी बेलगांव )



आर्याः प्रियपाठकमहोदयाः !! विदितमेव वः सर्वेषामखिलेऽपि भारते वर्षे भिन्नभिन्नभाषासु व्यवहरतामान्ध्र चोलपाण्ड्य केरलकर्णाटकमहाराष्ट्रादिविषयवासिनां दाक्षिणात्यानां तथा अङ्गवङ्गकलिङ्गकाश्मीरादिविषयवासिनामुत्तरदेशस्थानां च मिथो व्यवहारनिर्वाहाय समपेक्षिता काप्येकैव भाषा सर्वोपयोगिनी सर्वाङ्गसुंदरा चेति । एतदर्थे का वा भारतीयासु भाषासु सर्वोपयोगार्हा स्यात् सैव भाषा सर्वथा राष्ट्रभाषापदयोग्या स्यात् । अर्थात् सर्वेषामपि मिथो व्यवहारनिर्वहणाय या भाषा समर्था भवेत् सैव राष्ट्रभाषा भवितुमर्हति । भिन्नभिन्नभाषीगैर्मिथो व्यवहारः स्वस्वभाषया नैव कर्तुं शक्यते । अतः आसेतु शीताचलावधि एकैव सर्वोपयोगिनी सर्वाङ्गसुन्दरा सर्वेषामपि व्यवहारनिर्वहणसमर्था या भाषा भवितुमर्हतीति वयमत्र विमृशामः । सामान्यतः संप्रति भिन्नभिन्नप्रान्तीयैर्मिथो व्यवहारार्थे समुपयुज्यन्ते किल तैस्तैराङ्गलभाषा-हिन्दीभाषा संस्कृतभाषा च । भाषास्वेतासु बताङ्गलभाषा न निर्दोषा भवति । यतो भिन्नभिन्नदेशीया उच्चारणभेदेन कठिनामारचयन्ति । केरलादिदेशेषु नगराणां नाम्नामपि अश्रुतपूर्वतया ज्ञाताङ्गलभाषाणामपि विदुषां तद्योजने अत्यायासो भवति । तेन तद्विवक्षितार्थपरिज्ञानमपि न सर्वथा भवति । अतो हि आङ्गलभाषा न राष्ट्रभाषापदमर्हति हिन्दीभाषा राष्ट्रभाषा भवितुमर्हति इति बहवो विद्वत्प्रवराः संप्रति प्रयतन्ते । परं उत्तरदेशीयानां या अनेका भाषा वर्तन्ते तासु किल बह्वंशेन हिन्दीभाषासाधर्म्यमुपलभ्यते । अस्मात् कारणात् तेषां

तैस्तै हिंदीभाषया व्यवहारेण विवक्षितार्थो ज्ञापयितुं शक्यते इति तु सत्यं, तथापि सा परिस्थिति नं दाक्षिणात्यानां भाषासु समुपलभ्यते। दक्षिणे देशे बहुयो भाषाः स्वतंत्रा न हिन्दीभाषासाधर्म्यमनुसरन्ति ततः एतेषां हिन्दीभाषाज्ञानोत्पादनाय प्रयतनं अतीवश्रमकरं भवति। अनेके महाभागाः संप्रति दक्षिणे मद्रासप्रभृतिषु प्रमुखेषु नगरेषु हिन्दीभाषाशिक्षणसौकर्याय शालासंस्थाप्य तत्र तत्र यताहर्निशं श्राम्यन्ति च। परं नैतेषां श्रमः सफलतामुपयातीति वयमुद्विजामः। अर्थात् भाषाद्वयेऽप्यस्मिन् दोषानुपदर्श्य राष्ट्रभाषापदयोग्या सर्वाङ्गसुन्दरा सुसंस्कृता गीर्वाणवाणी एव सर्वथा युक्ता भवितुमिति हंत! वयमुत्पश्यामः। यतो हि सा सर्वेष्वपि देशेषु सुप्रचारा विद्वन्मान्यापि वरीवर्ति। चतुर्ष्वपि दिगंतेषु एकप्रकारेण हृदयंगमा व्यवहारनिर्वहणसमर्था विभ्राजते। गीर्वाणवाणी सर्वेष्वपि देशेषु समानरूपा सौन्दर्यशालिनी सहृदयहृदयाह्लादनपरायणा प्रणयिनामंतरंगाणि संप्रीणयति। अतः सर्वथा राष्ट्रभाषापदयोग्या सुसंस्कृता संस्कृतभाषैवेति वयं साभिमानं समर्थयामः। प्रायः सम्प्रति विद्याविभागाधिकारिभि र्माध्यमिकासु शालासु तत्र तत्र संस्कृतभाषा अवश्यमभ्यसनीयेति निर्धारयामासुः। यतोऽस्माकं भारतीयानां सर्वेषां संस्कृतभाषैव नितरां मान्या। सर्वेषामपि प्रमाणमूर्धन्यभूतो वेदः मनुयाज्ञवल्क्यादिमहर्षिप्रणीताः स्मृतयः इतिहासपुराणोपपुराणादयो महान्तो तथा न्यायवेदान्तव्यकरणयोगसांख्यादयः शास्त्रग्रन्थाः काव्यनाटकाख्यायिकादयोऽपि सरससरसया हृदयङ्गमया रीत्या यावंतः संस्कृतभाषयोपनिबद्धा न तथेतरासु भाषासु। एवमवैदिका अपि जैनबौद्धप्रभृतयोऽपि संस्कृतभाषायाः स्वीयान्यपरिमितानि ग्रंथरत्नानि निर्माय असाधारणां प्रीतिं प्रदर्शयामासुः। अतो भगवती सुरभारती राष्ट्रभाषा भवितुमर्हा नेतरेति एतावदेवनिरूप्य तदर्थं गीर्वाणवाणीप्रसारणमावश्यकमिति कांश्चिदुपायान् प्रदर्शयामः। यस्मिन्नगरे ग्रामे पत्तने वा यदि पंचषा अपि संस्कृतप्रणयिनो विद्वांसो विद्यार्थिनो वा स्युस्तैरेकत्र प्रतिपक्षं प्रतिमासं वा मिलित्वा संभाषणैः सदुपन्यासैर्वा गीर्वाणवाण्यां प्रभुत्वसंपादनाय प्रयतितव्यम्। एवमत्र दक्षिणे पुण्यपत्तने अहमदनगरे वाई क्षेत्रे बेलगावे गीर्वाणवाग्वर्धिनी नाम्नी सभा प्रत्यष्ठापि। तद्द्वारा भाषाप्रभुत्वसंपादनप्रयत्नोऽपि प्रवर्तितः। ... यदि सर्वेष्वपि नगरेषु प्रयत्नः क्रियेत तर्हि

गीर्वाणवाण्याः प्रसारः अधिकोभवेदेव । एवं लेखनकलाकौशल्यसंपादनायापि प्रयतितव्यम् तदर्थेविद्यार्थिनः प्रोत्साहनीयाः । प्राक् हस्तलिखितामासपत्रिकादीनि संपाद्य स्थलीयविद्यालयीनवाचनालयेषु प्रकाशयेत् । संप्रतिप्रकाश्यमानानि च संकेतनियतकालिकानि पत्राणि यथासमयमप्रमादं यथा प्रकाश्येरन् तथा प्रयत्नातिशयो विधेयः । प्रतिपत्रं संपादकैरपि प्रतिवत्सरमेकदापि विशिष्टाङ्कप्रकाशनाय यतितव्यम् । लेखकानां विदुषां वृत्तप्रकाशनं भावचित्र प्रकाशनं चावश्यकम् । विषयेऽस्मिन् प्रवृत्तानां परमोत्साहवतां श्रीमतां संस्कृतपत्रसंपादकानां श्रीकालीप्रसादशास्त्रिणां साहसं सहस्रशोधन्यवाद पुरस्सरं वयमतितरामतितरामभिनन्दामहे । महनीयाः पाठकोत्तमाः !! एवमादि प्रयतनेन गीर्वाणवाणीप्रसारणमतिशयं विधाय राष्ट्रभाषात्वं संपाद्य यशो लभेमहि । भिन्नभिन्नप्रान्तीयानां सुरभारतीरसिकानां विदुषां मिथः सौहार्दाभिवृद्धये सम्मेलनानि परिषदश्च अवश्यमपेक्ष्यन्ते । तदर्थं च प्रयत्नो विधेयः । किं तु सर्वैरपि संस्कृतप्रणयिभिः राष्ट्रभाषात्वसंपादनाय प्रयत्ने कृते संस्कृतभाषा राष्ट्रभाषा भवेदेव । अर्थाच्च राष्ट्रभाषा कथं भवेदित्याशङ्काया अवसरोपि न लभ्येतेत्यलं पल्लवितेन ।

---

"देवीं वाचमजनयन्त देवास्तां,
विश्वरूपाः पशवो वदन्ति ।
सा नो मन्द्रेषमूर्जं दुहाना;
धेनुर्वागस्मानुपसुष्टुतैतु,, ॥
—ऋ० ८ । १०० (८९ । ११

# प्रतीच्यदेशेषु संस्कृतभाषायाः प्रसारः ।

ले० पण्डित गोविन्दराजानकशास्त्री. एम० ए० एम० ओ० एल० टी० प्रभाकरः, श्रीनगर, कश्मीर।





अयि! निगममुकुटसततचरणविमलहृदयमुषितकलुषाः! कृतशास्त्रमन्थनाः! पण्डितप्रकाण्डाः। को नाम तावन्न वेत्ति यदस्माकं मातृभाषा प्रसवित्री हि देववाणी यस्यामस्माकमृषिभिर्महता परिश्रमेण सम्पादितानि ग्रन्थरत्नानि यस्याञ्चापूर्वसाहित्य-व्याकरण-न्यायादीनि-अनेकानि शास्त्राणि सन्ति। यस्यां हि भाषायामस्माकं भारतवर्षीयाणां समस्तानि खलु धर्मकृत्यानि विद्यन्ते सेयं किल भगवन्निःश्वसिता वेदापराख्या कस्मिन्नापि समये सर्वदेशभाषासु श्रेष्ठा नासीत यस्याश्च सर्वमेव प्रायशः भाषाजातमुत्पन्नं सेयं देववाणी कैर्नाम न प्रशंसिता कैर्वा ख्यातिमाचन्द्रतारकां न नीता, कैश्च विदेशीयैर्विदितमहामहिम्ना न संसेविता कथं वा तैरेव कृतानल्पपरिश्रमैः स्वीयेषु देशविशेषु जनपदेषु जनचयेषु आबालवृद्धेषु योषित्संघेषु न प्रसारिता येनात्राप्तज्ञानास्तेऽपि तारका इव कीर्तिपुञ्जपिञ्जरितानामानास्तारका रेजुः। इतिहासपुराणादिप्रतिपादितमर्थं शब्दलभ्यमेव च तत्त्वं यथावस्थितरूपमनल्पप्रयासेनोद्घोषयन्तः परां निर्वृतिं तेऽन्वभूवन्निति महदिदं सन्तोषस्थानम्। या पुनरेषा आर्यभाषा योषा चिरतरमाद्रियमाणा विद्यापरिपोषबद्धपताकया सकलकलाशालया प्रभासमानया समुत्थापितं यं कमपि नियममवलम्ब्य क्रमशो निखिलाभिराङ्गलकलाशालाभिरेकपदे भारतेऽस्मिन्नद्यः परित्यक्ता, विशेषतो निःसीमधनसम्पादनस्य भविष्यतो

राजराजनगरीविजयस्य महतः प्रभावस्यासंख्येयस्य वाचा वर्णयितु मशक्यस्य यशसश्च दिगन्तरालव्यापिन्या आंगलभाषया एवाभ्यसनं वरं निदानमित्यादिवचनवान् बालभानुलभानतटान् प्रवाहानिव मनोरथानाकलयद्भिर्गीर्वाणभाषाभ्यसनविमुखाभिलाषैः द्वीपभाषापरिचयलोलुपैर्विचिन्तितशरीरधनश्रमैरभिमतनगरी निवासखेदैस्तातपादैरनुज्ञायमानैर्भारतीयैर्बालनिवहैर्विचक्षणैरुपेक्षिता, अकाण्डे जडेनेव उद्वीजितेनेव, मूकेनेव उन्मत्तेनेव वीतरागेण तपोधनेन मौनव्रतधारिणेव रोपकुलपितेनेव प्रियतमेन आर्यावर्तीयेन निष्कासिता परिभूयमानेव पूर्णचन्द्रवदना पतिदेवता प्रोषितभर्तृकेव कुवलयनयना भूमौ विलुठन्तीव निरवलम्बा वल्लरीदीनदीना निरर्गलं विनिर्गलद्भिरश्रुधाराभिः कदुष्णाभिरमलाभिः पीनपयोधरमण्डलविसर्पिणीभिर्मुक्तावलीविरचनमान यन्ती दयनीया शोचनीया महन्तीं विपदं प्रपेदे सैवेदानीममरभणितिविमर्शकमहाभागैः रसिकसार्वभौमैः प्रतीच्यमहाशयैस्तत्तज्जनपदेषु देशविदेशेषु प्रख्यापिताऽद्यशः ब्रिटिशद्वीपे शर्मण्यमण्डले पाताळदेशपराख्यामेरिकादेशे निखिलैर्विद्यावृद्धैराद्रियमाणा संसेव्यमाना गीर्वाणवाणी सश्रद्धं सकुतूहलमन्ववाचिता विख्यातेषु विश्वविद्यालयेषु परां प्रतिष्ठां प्रतिष्ठापिता। सरोमहर्षणमस्या विद्याभ्यासेनामन्दमानन्दमवाप्नुवद्भिः प्रतीच्यैः काव्यनाटकालङ्कारान् तर्कव्याकरणज्योतिषमीमांसादीनि शास्त्राणि क्रमेणाधीतवद्भिः प्रोत्साहितानन्यभाषाभ्युदयसंभवैरात्मानं परवशीकुर्वद्भिः सकलानामपि वचसामविषयं प्रमोदं प्रकटयद्भि भूयसा-आनन्दबाष्पेण निरर्गलं विलोचने परिपूरयद्भिः प्रमोद विकसितमानसैर्निर्व्याजसिद्धया निस्तुलया भद्रंकरणैकतानक्रमया भूयस्या श्रद्धया महायाससञ्चितेन भूयसा नीवीधनेन केषाञ्चन प्रभूणां साहाय्येन च तत्र तत्र पाठशालासु कलाशालास्वभिवर्द्धयते यत्र यत्र चकोराः पूर्णचन्द्रोदयमस्या महान्तं विकासं प्रतीक्षमाना अनुरक्ततमा बद्धकौतूहलाः खेदमविचिन्त्य सुदूर

यानाशोऽनुदिनमस्याः श्रीवृद्ध्यै वद्धकटयो हि ते प्रयतन्त। अहो! किंवा वदामो वयं सुचिरं कठोरमतिदुःसहं मृतभाषेति दुर्व्यपदेशं भजन्त्या विषविस्फोटेनैव दारुणेन मूर्छितायास्तपस्विन्या अचिरेणैव प्रतीच्यदेशेषु परां समुन्नतिं प्रतिष्ठामापन्नाया देवभाषाया महीयसा समारोहेण विजृम्भमानं सनल्पमाश्चर्यमुत्पादयन्तं भागधेयपरिमाणम्—

आसीत्किलासौ अब्राहमराजर महाशयो डचदेशीयो यः। १६५१ तमे खिस्ताब्दे मद्रप्रान्ते निवसन् पुस्तकमेकं ओपेन डोरटु हेडेन हैथे डम नामानं धर्मार्थकाममोक्षप्रतिपादकं धर्मग्रन्थं प्रकाशयामास। तदनन्तरं च फ्रांसदेशीयो बर्नियर ( १६७१ ) महात्मा भूगोलन्यायधर्मपथप्रतिपादकं भारतीयं विज्ञानं व्याऽकरोत्। पियर पोंसः (१७४०) अमरकोषादिग्रन्थानामनुवादं विधाय प्रतीच्येषु देशेषु प्रख्यापितवान्।

चार्ल्स वेल्किन्स १७८५ नामाङ्गलस्तु वारेन हेस्टिंग्ज काले भारतवर्षमागत्य श्रोतृपरम्परया ज्ञातदेववाणीप्रभावः सञ्जातकुतूहलोऽनतिचिरमेव भगवन्तीं देवगिरं भूयसा परिश्रमेणाभ्यस्य श्रीमद्भगवद्गीताहितोपदेशयोराङ्गलभाषायामनुवादं विधाय पाश्चात्येषु प्रदेशेषु प्रसारमकरोत्। सर विलियमजोन्स ( १७४-९४ ) महाशयस्तु वस्तुतः संस्कृतभाषायां विहितश्रमोऽनर्घरत्नगर्भां सर्वथा कामान्पूरयित्रीं तां सभाव्य शकुन्तलामनुस्मृतिप्रभृतीन् ग्रन्थचयान् आङ्गलभाषायामनूद्य यूरोपीयदेशेषु स्वडिण्डिमघोषं देववाणीप्रभावं प्रकटयाञ्चकार। येन हर्डर ऐण्ड गोठे प्रभृतीनां कोविदानां रोमाञ्चकण्टकितास्तम्भमापन्नासीत् तनूः अनवरतकम्पमन्थरा अङ्गुलयः, आनन्दवाष्पधारामिव विलोचने मध्येमध्यमवर्षताम् प्रमोदविकासिमानसेव किंकर्तव्यतामूढहृदयेव सोप्लुति नृत्यति स्म चेतोवृत्तिः। ( हेनरी थामस कोलब्रूक १७६५-१८३७ ) तु बहुनायासेन बुधगिरमधीत्य

अनेकान् भिन्नविषयान् ग्रन्थांश्च संमुद्र्य प्रकाश्य संस्कृतभाषाभ्युदयं पश्चिममण्डलान्तर्वर्तिदेशविदेशेषु प्रसारयामास ( एलैक्जैण्डर हैमल्टन १७६५-१८२५ ) फ्रांसदेशीयैः कारावन्धनं नीतः पेरिसपुरे फ्रांसीयान् शर्मण्यांश्च संस्कृतमध्यापयामास। येन फ्रेड्रिच स्क्लेगल फ्रौज योप आदयस्तु विज्ञातनिर्जरभाषा विभवाः शर्मण्या जयपताकां सर्वत्र पश्चिमे मण्डले बद्धकौतूहलाः पंडितचरणाः समुज्जृम्भयाञ्चक्रुः ( एफ. रोजेन एण्ड रुडाल्फ रोथ, १८२१-९५ ) महाशयौ कृतशास्त्रमन्थनौ पण्डितप्रवरौ देवगिरमेव सर्वासां भाषाणां मातरं मन्यमानौ वेदानामनुवादं विधायापौरुषेयत्वं भगवन्निःश्वसितत्वं च तेषां संभाव्य यूरोपीयान् देवभाषाविज्ञान् कृत्वा सुप्तोत्थितान्निवात्यन्तमाश्चर्यसागरनिष्णातानकुरुताम्। प्रोफेसर ववलर तथा प्रोफेसर कीलहार्न आर्यावर्तीयामाद्यां सनातनीं भगवतीं त्रिदशविद्यामुपास्यानल्पेनैव प्रयासेन तस्याः प्रभावमुपश्लोक्य अनुष्ठेयामभिनवामध्ययनपद्धतिं सम्यक् प्रबोधाय पाश्चात्यानां सन्दर्श्य परमानन्दं जग्मतुः मोक्षमुलरादयो भारते यात्रां कृत्वा निखिलभाषाजननीं भगवतीं वैदिकीं वाचमेव मन्वाना अप्रतिममस्याः प्रभावं सम्यगनुशील्य शर्मण्यादिषु जानपदेषु अनुवादादिभिः जीर्णोद्धारैः प्राचीनपुस्तकप्रकाशनैः देवभाषापुस्तकालयादिप्रतिष्ठापनैर्विदेशीयभाषाभिस्तुलासंकलनैस्तमस्तोम निवारकं भानोरिवाप्रतिमेयं सर्वत्र विसारिनिरतिशयं गरिमाणं ज्योतिःपुञ्जं महान्तं भास्वन्तं प्रकाशमज्ञानमेघपटलान्निर्गतमिव यूरोपीयेषु देशेषु देवभाषाद्युमणितेजः प्राकाश्यमानिन्युः येभ्योऽर्वाचीना अनेके तत्रत्या विद्वांसः संजातोत्कण्ठाः प्राच्याया देवभाषायाः निखिलानेकविधविज्ञानभण्डारायास्तत्तत्प्रयोजनानुसारि फलविशेषमधिगत्यान्यान् सुहृदो मित्राणि बान्धवांश्चास्या एव प्रदेशमैहिकामुष्मिकफलदायकमध्ययनात्मकमकार्षुरिति।



# जर्मनदेशे संस्कृतप्रचारः

ले० डा० एफ० आटोश्रडर पी० एच डी० विद्यासागर, जर्मनी।

किंचिदपि वस्तु देशमधिकृत्य भवति भाषायां तु नितान्तमेव देशापेक्षिता वर्तते। देशापेक्षिणी भाषा न कदाचिदपि सार्वभौमिकी भाषा वाच्यास्ति। यद्यपि सति प्रचारे भवत्येव तस्या अपि प्रचारः; परं तस्याः प्रचारकाणामपनयेऽल्प एव काले तस्या नितरां विनाशः। यथा भारतवर्षमेव गृह्णनां देशेऽत्र संप्रति आङ्गलभाषा राष्ट्रभाषापदमधिरूढा। अस्याः प्रचुरः प्रचारोऽपि भारते सर्वत्र। श्रूयते काचिदप्यन्या भाषाऽत्र राष्ट्रभाषा भविष्यति तथा सति किमाङ्गलभाषाऽत्र देशे स्थास्यतीति कस्यचिदस्ति विचारः प्रेक्षावतः। एभिरध्यवसीयत इदं काचिदपि देशापेक्षिणी भाषा न सर्वतोमुखी प्रसरितुं समर्था विद्यते। यस्या न सर्वत्र समादरः सा देशविशेषे आसादितसौन्दर्या कामं नृत्यतु, परमस्या देशान्तरे कारणमन्तरा न शोभनः परिग्रहः।

या खलु न कस्यापि देशस्य अपितु पूर्णशब्दाक्षरसाहित्या काले काले सर्वत्र लब्धप्रचारा शब्दार्थगाम्भीर्यमनोहरा आसृष्टेः सद्विद्वित्सप्रथितमाहात्म्या अध्यात्मचिन्तकैकचिन्त्या विज्ञानपूर्णा सा एव सार्वभौमिकी भाषा।

भूगमाषायां सर्वोत्कगुणसम्पन्ना संस्कृतभाषा एव समुपलब्धाऽभूत्। निष्कारणमेवेयं सर्वैरधीयते। भारते तु यद्यपि नेय-

मधुना राष्ट्रभाषा तथापि यावन्तोऽस्या विद्वांसो भारते लभ्यन्ते न तावन्तो राष्ट्रभाषाया अपि आङ्गलभाषायाः। भारतीयैस्त्वगृहनिधिरिवेयं रक्ष्यते। भारतीयानां सर्वोऽपि सामाजिको व्यवहारोऽस्यामेव चलति। राष्ट्रभाषापदेऽनारूढाऽपीयं तेषां राष्ट्रभाषैवेत्यवगन्तव्या।

साम्प्रतमस्याः प्रभावेण मोहिता एव जर्मननिवासिनो वर्तन्ते। अत्र संस्कृतस्य प्रचारः सातिशयोऽस्तीति नाऽवहति संदेहपदम्। ओटोष्ट्राउसमहोदयप्रकाशितया जर्मनीयविद्वन्नामावल्यां जर्मनदेशे संस्कृताध्ययनप्रचारस्य स्पष्टमेव बाहुल्यं समीक्षितम्। अत्रत्या पी० एच० डी० परीक्षा सर्वप्रधाना संस्कृतमेवोररीकृत्य वर्तते। यद्यपि नैव सर्वे छात्रा इमामधिगच्छन्ति परीक्षां तथापि वैकल्पिकभाषासु संस्कृतभाषामेव स्वीकुर्वन्ति। एते महाकविकालिदासप्रभृतिकृतकाव्येषु पुराणेतिहासोपनिषत्सु च महानन्दमनुभवन्ति। अत्रत्या अध्यापकाः सर्वोच्चशिक्षाप्राप्तैः छात्रैः संस्कृतस्य नवीनान्यन्वेषणकर्माणि कारयन्ति। जर्मनेऽत्र स्वस्वविषये संस्कृतसाहित्यस्य महान्तो विद्वांसः सन्ति। ते यथा—

अध्यापको "जाली" हिन्दूधर्मशास्त्रस्य तथा वैद्यकस्य च पूर्णो विद्वान्। पूर्वीयसंस्कृत-विज्ञानवतां जर्मनीय-विदुषां मध्ये "जाली" महोदयः सुप्रसिद्धः। अध्यापको "याकोवी" महाशयः जैनधर्मग्रन्थस्य विद्वत्तमोऽस्ति। अनेन जैनधर्मस्य ग्रन्थास्तु लिखिता एव व्याकरणालङ्कारज्योतिषादीनामप्यनेके निबन्धा निबद्धाः। प्रायो जर्मनस्य निखिलेऽपि विश्वविद्यालयेऽस्य महानुभावस्य ग्रन्था अध्याप्यन्ते। वर्लिनमहाविद्यालयस्य बहवो व्यतिताः संस्कृतस्य प्रधानाध्यापकाः। भारतवर्षेऽपि देशाटनाय गतवन्तः। इमे भारतीयशिलालेखादिविषये पूर्णविज्ञा आसन्।

अथातो केषांचिन्नामान्युपस्थाप्यन्ते—प्रोफेसर "लायडर्स" म्यूनिच महाविद्यालयस्याध्यापकः, "ओटेलिने" महाशयो ब्राह्मण-

ग्रन्थविषयेऽनेकनिबन्धलेखकः । "पीग" महोदयः "सिलिङ्ग" महोदयश्च गार्जिटननगरस्याध्यापकौ स्तः । इमौ ऋग्वेदस्य विषये बहुज्ञाविति न सन्देहास्पदम् । महाशय-"पीगस्य" गुरुः "गोल्डननेट" महोदयः समग्रमृग्वेदं जर्मनदेशस्य भाषायामनुदितवान् । पुस्तकमिदं "हार्वर्ड" महाविद्यालयेन प्रकाशितम् । अध्यापक "गोल्डननेट" स्यानन्तरं तत्स्थानापन्नोऽध्यापकः "नीवेल"-महोदयः "भारतीयकाव्यानामाधारः" इत्येतन्नामकस्य ग्रन्थस्य प्रणेता । ग्रन्थोऽयं कलकत्तास्थमहाविश्वविद्यालयेन प्रकाशितम् । ऋग्वेदस्य प्रसिद्धो विद्वान् "नाइस्सेरः" ऋग्वेदस्य शब्दकोषस्य निर्माता । जर्मनस्य महाविद्वान् डा० "सावेन" महोदयो न्यायदर्शनस्यानुवादमकरोज्जर्मनभाषायाम् । भारतसङ्गीतशास्त्रे लब्धकौशलेन डा० "लाश"-महोदयेन याज्ञवल्क्यस्मृतौ नवीनं महान्तं ग्रन्थं विरचितम् । मंस्टरमहाविद्यालयाध्यापकेन "श्मिटमहोदयेन कामशास्त्रे महती योग्यता प्राप्ता अध्यापकाः "वेटीङ्ग्मन" "जिम्मेर" "सरवाल्डस्मिड" "गोपटजका" संस्कृतसाहित्यस्य पूर्णावगन्तारः । वेस्लाविद्यालयस्याध्यापकः "लीवीक" महोदयो व्याकरणस्य महापण्डितः । अस्य पाणिनिचान्द्रव्याकरणे प्रकाशिता ग्रन्था भारतवर्षेऽपि सम्मानिताः सन्ति । अध्यापक-"हेयेरा" योगशास्त्रे "ओटोमहाशयः हिन्दूधर्मशास्त्रे, डा० प्रिजमहोदयः पौरस्त्यविषयेऽनेकग्रन्थस्य लेखकाः ।

एवमादयो विद्वांसो जर्मनदेशे संस्कृतभाषाया आसन् सन्ति च । अत्र सूचीयं दिग्दर्शनमात्रधिया लिखिता जर्मनदेशीयानां संस्कृतेऽनुरागं दृष्ट्वाऽऽयातीदमेव चेतसि यदेतद्देशीयानामेषैव भाषा प्रधानतमा कदाचिद् भविष्यति । भारत-वर्षे संस्कृतं राष्ट्रभाषाऽभूदिति श्रोतुं समुत्सुकोऽहमतिशयितम् । अयोध्यातः संस्कृतस्य साप्ताहिकं पत्रं निःसरति इति श्मारं २ नितरां प्रसीदन्निचेतः । शम्

# संस्कृतगौरवम् ।

( ले० पं० कृष्णदत्तभारद्वाजः, एम० ए०, आचार्यः, शास्त्री दिल्ली )



संस्कृतवाङ्मयस्य माधुर्यं विश्वविदितम् । न केवलमस्य शब्दसौष्ठवमर्थगाम्भीर्यं गुणवैशिष्ट्यमलङ्कारबाहुल्यं रसातिशायित्वं च सहृदयानाह्लादयन्त्यपि तु अस्य परमपुमर्थसाधकत्वं विज्ञान् परांमुदमापादयति । इह धर्मार्थकामानां लाभेन सममेवाऽपवर्गमार्गमादिशन्तीयं भाषा गङ्गेव जनताऽघौघविध्वंस-क्षमा ज्योत्स्नेव शान्तिप्रदा निखिलजगत्प्रसृतभाषाणां मुकुटमणिर्विजयतेतराम् । नैव गरिमा कालविशेषजागरूकः किन्तु त्रिकालसिद्ध एव । सर्गादौ श्रीभगवन्निश्श्वासभूता श्रुतिः संस्कृत एव प्रादुर्भवति सर्गान्ते च पुनः स्वाकारणे श्रीभगवत्तत्त्व एवात्येति क्रमोऽयं सनातनः अतः संस्कृतभाषाया माहात्म्यमपि सर्वकालीनमेव ।

इयमेव भाषा पुरा सर्वेषां पुंसां गीरध्यासीत । कृतयुगमारभ्य द्वापरं यावत् सुरगीरियमेव सर्वासु दिक्षु निर्वाधं प्रकाशं प्रचारं चालब्ध । कलौ त्वस्मिन् यथा कालमहिम्ना वैदिक एक एव धर्मोऽनेकधा वितायते तथैव संस्कृतमपि वाङ्मयं बहुधा विभागमाप्नोति । यथा वीजमेकमेवशाखाप्रशाखापत्रपुष्पफलादिरूपाणि भजते, रूपाणि चेमानि बीजाद् भिन्नानीव प्रतीयन्ते तथैव संस्कृत-बीजं लैटिन ग्रीक-फ्रैंञ्च-जर्मन-प्रभृतियूरो-

पशूनां निदानं स्वतनूजन्मस्योऽन्यदिव दृश्यते किन्तु यथा वनस्पति विद्यानिष्णा बीजशाखादीनां वास्तवं रहस्यं वेत्ति तथैव भाषातत्त्ववेत्ताऽपि संस्कृत-तज्जातभाषाणाञ्च याथात्म्यमवैति ।

अधस्तनशब्दानां पर्य्यालोचनया विषयोऽयं द्राक् प्रस्फुटी भविष्यति—

| संस्कृत | हिन्दी | अवेस्ता | लैटिन | गौथिक | स्लैवोनिक | आंग्लभाषा |
|---|---|---|---|---|---|---|
| अहम् | मैं | अज़म् | अगो | इक | | |
| माम् | मुझे | माम् | मिहि | मिक | | |
| नव | नौ | नव | नौवेम | न्यूं | न्यूंस् | |
| दश | दस | दश | दैसेम | | | |
| सप्त | सात | हप्त | सैप्टेन | सिवन | सैप्टिनि | |
| कुठार | कुल्हाड़ा | कुल्टर | | | | |
| पाणि | | | पाल्मा | | | |
| पितृ | पिता | पिदर | पेटर | | | फ़ादर |
| मातृ | माता | मादर | मेटर | | | मदर |
| स्वसा | | | | | | सिस्टर |
| दुहितृ | | दुख़्तर | | | | डौटर |

एतादृशानि शतान्युदाहरणानि दातुं शक्यन्ते यैः संस्कृतस्य योरोपीय-भाषा-जननीत्वं समर्थ्यन्ते ।

आङ्गल-भाषा-प्रयुक्तानां 'काउ' 'वाटर' "रूपी" प्रभृतीनां शब्दानां मूलान्वेषणाय प्राच्या विद्वांसो न प्रभवन्ति चेन्न प्रभवेयुः परन्तु प्रतीचां शाब्दिकानां प्रसिद्धश्चैम्बर्समहोदयः स्वनिर्मिते कोषे संस्कृतप्रभवत्वमेवैषां मात्सर्य्यमुत्सार्य्य सङ्कोचमाकुञ्च्य स्वकुर्वाणो 'गो' 'उदन्' 'रूप्य' इत्यादीञ्छब्दान् निरूपयति ।

सुधियामत्र प्राय ऐकमत्यमेव यदधो निर्दिष्टाः तत्समानाश्च भाषाः संस्कृतादुद्भूताः । पाली, महाराष्ट्री, शौरसेनी,

मागधी, गौड़ी, लाटी, पैशाची, अपभ्रंश, पञ्जाबी सिन्धी, गुजराती, मराठी, उड़िया, बङ्गाली, हिन्दी, अवेस्ती, आर्मीनियन, पेल्वेनियन, ग्रीक, इटैलिक, कैल्टिक, ब्रिटैनियन, गोलिक, आइस्लैण्डिक, डेनिश, नौर्वेजियन, स्वीडिश, इंग्लिश, फ्रिशियन जर्मन, प्रशन, लिथुएनियन, बलोरियन्, रशन, पौलिश।

प्राकृतात् संस्कृतस्य जनुरभूदिति केचिद् ब्रुवते परन्तु भाषाकोविदानां मते भाषाविकाशस्य ये सिद्धान्तास्ताननुसृत्य विद्वांसः प्रतिपादयन्ति यत् संस्कृतादेव सर्वप्राकृतानां जन्म। प्राकृतवैयाकरणानामपि मते संस्कृतादेव प्राकृतभाषा अजनिषत।

पुरुष, नूपुर, मयूर, बदर, शय्या, यौवनादिभ्यः एव पुरिस, णेउर, मोर, वोर, सेज्जा, जोव्वणादीनां जन्म युक्तं प्रतिभाति न तु पुरिसादिभ्यः पुरुषादीनाम्। भाषासरिदिव चञ्चलयते। सात्मानं निरन्तरं परिणमयति। तयैकस्मिन् स्वरूपे न स्थीयत इति विदां मतम्। अस्याश्चाञ्चल्यस्य, परिणामस्य, स्वरूपानवस्थानस्य च बहूनि कारणानि प्राज्ञैः प्रदर्शितानि। तेष्वेकम् 'उच्चारण-सौकर्य्यम्' अप्यास्ते। मेघापेक्षया "मेह" भ्रात्रपेक्षया "भाई" स्त्र्यपेक्षया "त्री" "तिरिया" च सुगमतया प्रोच्यन्ते। डिसैम्बर, जैन्यूवेरी, फेब्रुवेरी प्रभृतय आंग्लशब्दा अपि भारतीयैः सौकर्य्येणोच्चार्य्यमाणा दिसम्बर-जनवरी—फरवरी इत्यादि रूपाणि भजन्ते। को नाम प्रतिपादयिष्यति यद् दिसम्बरादिभ्यो डिसैम्बरादीनां रचनाऽभूत्? एवमेव सुखपूर्वकमुच्चारितानां मेहादिशब्दानां स्थाने क्लिष्टतरं प्रोच्यमानान्मेघादिशब्दान् विन्यस्तुं कः सुकण्ठो यतिष्यते?

यां नियमावलीमवलम्ब्य संस्कृतात् प्राकृतसमुद्भवस्तामनुसृत्य विदेशीयानामपि प्रोक्तानां वाचां जन्माभूदित्येव सम्प्रति राद्धान्तः।

भारतेऽस्मिन्वर्षे बद्धमूलः संस्कृत-तरुः स्वमहिमयशो दशसु दिक्षु विस्तारयन् जगज्जनमनांसि वशीकर्त्तुं समर्थः । खिस्तीयशताब्दयामेकोनत्रिंशतितमायां "तुलनात्मक-भाषा-विज्ञानम्" प्रसृतम् । व्यापाराय हरिवर्षान् सागरं तीर्त्वाऽऽर्यावर्त्तं समागताऽऽङ्गलजातीया महानुभावाः क्रमशः सर्वाङ्गीणामुन्नति मीप्सवोऽत्रत्यानां धार्म्मिकभाषामध्येतुमध्ययतन्त । महता यत्नेन पिपठिषूणामाकांक्षापूर्णा । एकेन विदुषा संस्कृतसाहित्य-गौरव-विमुग्धेन सता संस्कृतग्रन्थानांग्लभाषायामनुवादितुमभ्य-लप्यत । श्रीमद्भगवद्गीता कालिदासकृतमभिज्ञानशाकुन्तलं च प्रथममनूदिते इति कथ्यते। यदा चेमे ग्रन्थरत्ने विदेशमुपगते तदा विदेशीया आंग्लभाषायामेते अधीत्य मुक्तकण्ठं पुस्तकद्वयं प्रशशंसुः । आतदवधेरुत्तरोत्तरम् संस्कृतवाङ्मयमधिजिगांसवः आसन् सुधियस्तेषामनुशीलनस्य चाऽयमुदर्कः सर्वसम्मतो यदिदं वाङ्मयमनेकसां वाचां जनकम् । इत्थमेव चतुः पञ्चोत्तरसप्त-दशशततमेशवीयेब्दे फ्रांसदेशवास्तव्यः पैरनमहोदयः प्राचीन-पारसीकभाषामध्यैष्ट । कतिपये मनीषिणोऽनेकासां भाषाणां सा-दृश्येनाकृष्टचित्ताः सन्त एतस्मिन् विषये गवेषणापरायणा अभूवन् संस्कृतप्रभवत्वं चेतरासामात्मवर्गीयाणां गिरां प्रत्यपीपदन् ।

संस्कृतस्य सर्वाङ्गीणं माहात्म्यं को वक्तुमीष्टे । इयमेव वाणी राष्ट्रभाषापदमध्यास्तुमुपयुक्ताऽऽस्ते । संस्कृतसौभाग्यो-दयाऽऽकांक्षया मोदमानानामस्माकमभिलाषां पुष्णीयात्सतामा-नन्दकं श्रीश्रीपतिचरणनलिनयुगलम् ।



# संस्कृतभाषाप्रचारह्रासकारणम्।

अ० भा० व० साहित्यसंमेलनमन्त्री प्रो० डुंगरकालेज, बीकानेर

यस्याः सुरभारत्याः सार्थकशब्दानां साहाय्यमधिगम्य नानाख्यानसमलंकृतये सृष्टिः समुल्लसति, यस्याश्च शब्दार्थज्ञानेनैव जगति नित्यं नवं ज्ञानज्योतिरुदेति, यस्यामेव च पुनः सर्वाः संज्ञाः कल्पान्ते सुखं स्वपन्ति तस्या वेदजनन्या महासरस्वत्याः परमशक्तेः संस्कृतभाषायास्तु ह्रासो न कदापि भूते भूतो न च भविष्ये भावी। युगधर्मानुसारं मानवसमाजविकासनियमानुकूलं वा किन्तु संस्कृतभाषाभाषिणां संख्यायामवश्यमनुभूयते विपर्यासः। संख्यान्यूनतैव परं न भवति भाषासमुन्नतेरवनतेर्वा निकषग्रावा। सत्यं, सन्ति बह्व्योऽत्र भाषा या हि प्राचीनकाले प्रचुरप्रचारा अपि नेदानीं क्वचिदधीयन्तेऽध्याप्यन्ते वा मृतभाषाशब्दश्च तासु चरितार्थो भवति संस्कृतभाषा तु न परं तज्जात्यन्तर्गता भवति। तासां भाषाणां ह्रासहेतुस्तास्वेव प्रस्फुटो विद्यते। न तासु संस्कृतभाषावत् विकासशक्तिः, सर्वार्थप्रतिपादनशक्तिः विश्वव्यापकसम्बन्धशक्तिर्वा जागर्ति न च तासां कलेवरः प्रातःस्मरणीयैरखिलज्ञानविज्ञानावतारैः पूज्यैः महर्षिभिः त्रिकालाबाधशक्ति

समन्वितैर्विचारैः परिपालितः पोषितो वा। तर्हि स्थलविशेषेषु यूरोपीयकुसुमवत् नवं विकसितास्तत्कालमेव प्रणष्टाश्च।

सत्यप्येवं यदि संस्कृतस्त भारतेऽन्येषु देशेषु वा न व्यापकः प्रचारस्तर्हि तत्र कारणं जगतः स्वाभाविकी प्रवृत्तिः। भारतीयानामुपेक्षा, लोभप्राचुर्यं च। ज्ञानापेक्षयाऽज्ञानाधिक्यं, पवित्रापेक्षयाऽपवित्रवस्तुबाहुल्यं च यथा स्वत एव संस्कृतौ संसरति तथा संस्कृतापेक्षयाऽसंस्कृतभाषाणामपि प्रचारो न कश्चन प्रकृते नवीनः पन्थाः।

ये हि कथयन्ति यदियं भाषा केवलं ब्राह्मणानामेवासीत् ब्राह्मणानां ह्रासानन्तरं चास्या अपि ह्रासः समजनि ते न जानन्ति कीदृशास्ते प्राचीना ब्राह्मणा आसन् किं वा तैर्जगद्धिताय सम्पादितम्। नित्यैः शब्दैः सम्पन्नेयं भाषा न प्राकृतजनप्रयत्नापेक्षिणी स्वोत्पत्त्यै संजाता। ब्राह्मणानामेवेयं भाषेति येषां पक्षस्ते न जानन्तियत्कृतेऽपि पुरा जैनबौद्धादिभिः संस्कृतभाषायाः तिरस्कारे पश्चात्तु कृतैव तैः संस्कृतभाषाया महती सेवा।

व्याकरणनियमैरेषा परितोबद्धा न मनागपि प्रचलितुं प्रभवति--इति यैः समुद्घोष्यते न तैरपि कदाचन संस्कृतभाषानुशीलनं विहितम्। व्याकरणज्ञाने न संस्कृतभाषाबोधे यादृशं सारल्यं भवति तादृशमन्यासां भाषाणां सहस्रेषु ग्रन्थेषु पठितेष्वपि न भवति। किमर्थं कथं चास्य शब्दस्यायमर्थ इति नतैः स्वप्नेऽपि किंचिदनुभवितुं शक्यते।

माघादिकविप्रवरेषु पाण्डित्यप्रदर्शनप्रवृत्तिः सारल्यापहारिणी संस्कृतप्रचारविरोधिनी च यैर्विचार्यते ते तु रत्नमपि रजःकण इव सर्वत्र पतितं सुलभं च वांछन्ति यस्या भारत्या भाः सर्वदिग्व्यापिनी यस्यां चानन्तसौन्दर्यविकासशक्तिः सा कथं नामैडकेव मार्गमेकमेवानुसरेत्। भारतीयहृदयभावाश्च न केपुचन

परिमितेष्वेव विषयेषु विहरन्ति न चापि संस्कृतभाषाशब्दाः केचनैकमेव स्थूलमर्थं प्रतिपाद्य कृतार्था भवन्ति । कविप्रतिभा हि विभिन्नावस्थागतरसपरिप्लुत्या विभिन्नस्वभावान् सहृदयाननुरञ्जयति । नातः कवयः केवलं प्राकृतजनप्रवृत्तेरेव न सर्वथा दासा अनुयायिनो वा जायन्ते । अन्ये प्रसादगुणगुम्फिताः सूक्तयः उपवनविहरणानुकूलसरलसरणिवत् सरलाः सरसाश्च भवन्ति यथापि सघनविपिनालिवेष्टितपर्वतस्य पन्थानोऽपि भवन्त्येव मनोहारिणः शान्तिप्रदायकाश्च ।

प्रान्तीयभाषाणां प्रचारेण संस्कृतस्य ह्रास इति यैः प्रोच्यते तैर्नैवं विचार्यते यत्प्रान्तीयभाषाणां प्रचारस्तु सदैवासीत् कवयश्चापि तासु भाषासु सदैव काव्यादीन् निरमापयन् न किन्तु तावता संस्कृतस्य ह्रासः समभूत् । अधुना हि सत्यपि प्रान्तीयभाषा प्रचारे आङ्गलभाषाप्रसारो भवत्येव । भारते च प्रान्तीयभाषाणां संस्कृतस्य चैवंविधः सम्बन्धो यन्मिथ एव तयोः समुन्नतिर्भवति । प्रान्तीयभाषाः संस्कृतभाषाया सततं पालयन्त एव नात्र कस्यचन वैमत्यम् ।

इतरेऽपि ये केचन कलिकालादिसमाश्रिता हेतवस्तेऽपि वस्तुतोऽहेतव एव । कारणेषु प्रधानं कारणं तु लोभादि प्रघुक्षितोऽस्माकं स्वार्थ एव । विदेशीयभाषानुशीलन एव सम्प्रत्यस्माभिर्निश्चीयतेऽस्माकं स्वार्थसिद्धिः । प्रत्यक्षरूपेण च तद्भाषानुशीलनपरेभ्य एव तत्तद्विभागेषु तत्तत्पदेषु नियुक्तयः सन्ति सावकाशाः ।
किन्तुभाषाध्ययनस्य प्रयोजनं जीविकोपार्जनोपाय एव सर्वप्रथमो धर्म इति येषां मनःप्रवृत्तिस्तैर्महानुभावैर्यदि कश्चन लौहकाष्ठादिव्यापार एव मनो निधीयते चेत्परं तेभ्यो लाभकरं तत्कार्यं भवेत् । आङ्गलभाषाज्ञानेनापि च कीदृशः सम्प्रति बी० ए० एम० ए० समवेतेषु विप्लवः सोऽपि विचारदृष्ट्या तैः सम्यङ् निरीक्षणीयः ।

अतः स्थूलस्वार्थबुद्धिमपहाय वास्तविकस्वार्थसंरक्षणाय यद्यद्यापि वयं स्वकर्तव्य पालनपराः सन्तः स्वधर्मरक्षणाय अलौकिकभाषासंरक्षणाय च प्रयतामहे तर्हि नूनं पुनरपि स्यादेव संस्कृतभाषायाः प्रचारः, देशस्य चास्य पुनरपि सर्वत्रैवानुपमः सम्मानप्रसारः। न चायं समयः किलोपेक्षायाः। संस्कृतभाषारक्षणं भारतीयसभ्यतासंरक्षणमस्ति। यैस्तन्नरदयते तैः स्वदेशसंस्कृतिरपि सर्वथा विहन्यत एव। बद्धपरिकरैरतोऽस्माभिर्यत्करणीयमस्ति तदद्यैव करणीयम् सर्वैरेव च सर्वं संस्कृतभाषानुरागिणो विधेया। अन्यथा सुरभारत्या विरहितं स्थलं केवलं निरर्थकध्वनिपूर्णं संकेतज्ञानाश्रितं च साहित्यशून्यमेव भवेत् देशश्चायं भारतः पुनर्भारतो न भवेत्।



# संस्कृतस्य राष्ट्रभाषात्वम्।

ले०—बालकविः केवलानन्दः "अज्ञेयः" न्यायशास्त्री, काशी।



( १ ) सुरनरमुनिवृन्दैर्वन्दनीयाऽनवद्या,
निधनमुपगता हा! देववाणी विशुद्धा।
तदपि सपदि पूज्या राष्ट्रभाषा मनोज्ञा,
पदमिति च वितीर्यैतद् बुधैः संस्कृतज्ञैः ॥१॥

( २ ) जगति च शुभकार्ये ऽत्रान्तरायान्तरायं,
प्रतिपलमितभाग्याः संविकुर्वन्तिनीचाः।
त्वरितमथ भवद्भिश्चात्रदत्तावधानैः
कथमपि खलवृन्दा वारणीया बुधेन्द्रैः ॥२॥



## संस्कृतभाषाया देवभाषात्वेनोपवर्णनस्य बीजम्

—०::▭::०—

( ले० पं० श्रीघनश्यामचन्द्रशास्त्री "विद्यामार्तण्डः" लक्ष्मणगढ )

—०::*::*::*::०—

मा ननीयास्त्रिदशवाक्विपुलाटवीविहरणपञ्चानना विशिष्ट-विद्वांसः ! नास्त्यविदितं तत्रभवतां श्रीमतां यदमेरिकायूरोपप्रभृतिदेशीयशिक्षितपुरुषापेक्षया भारतीयसुशिक्षितनरगणना स्वल्पतरेति । तद्देशीयानां जायमानासु महासमितिषु तत्रत्यैः प्रकाण्ड-विद्वद्भिः सपटहघोषमेवं रारण्यते यन्नास्ति भारतीयेषु विशिष्ट-विज्ञानगर्भितशास्त्रज्ञजनसंख्या गणनीयेति । किन्तु किञ्चिदंशत-स्तेषां वचसि तथ्येऽपि पावनेऽत्र भारते बहवोऽमरभाषासेवकाः प्रकाण्डतमा वैदिकविद्वांसो निभाल्यन्ते, येषामाचरितस्य कृतेः स भाषणानुष्ठानस्य चावलोकनेन विज्ञवरा अपि पाश्चात्याः सशिरःकंपं विस्मयन्ते भाषन्ते च यदेषा दिव्यशक्तियुतदेवभाषा सम्पन्ना वरीवर्ति, चैषां महामहिमशालिनी संस्कारयुता वागिति । परन्त्व-भीलस्थानमिदमस्ति यत् सांप्रतिका भारतीयविद्वांसः "संघेशक्तिः कलौयुगे" इति नियममजानाना विपिनैकदेशस्थकेशरिवदालस्याभि-भूताः प्रायेण निजस्वरूपानभिज्ञा इतरवाग्वाणैराहता अपि न किमपि कर्तुं पारयन्ति, न च किमपिप्रबलमान्दोलनं चरीकृतति । अन्यथा सुरभाषाया राष्ट्रभाषात्वं कथंकारं संदिह्येत, कथम्वा सुरीतिसंपन्ना-

मेनामपहाय भाषान्तरं महत्त्वमेतदीयमपहर्तुं प्रयतमानमवलोक्येत अस्तु। तावदेवं कथयितुमात्मा शिक्षजनीयः सहर्षमुच्छ्वसिति यत् संस्कृतभाषैव देवभाषेति। वर्तन्ते ह्यस्यामेव सुरीतिनीतिप्रीति समासशक्तिबहुला वीतरागाचारिता आत्मोन्नतिविधायका मञ्जुलाः प्रयोगाः। अत्र च देवसमानधर्मणां ततोऽपि महत्त्वपूर्णां विशिष्ट-शक्तिमभिलष्यतां मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिरो यमापस्तंबसंवर्त-कात्यायन-बृहस्पति-पराशर-शङ्खलिखितदक्षगौ-तमशातातपवसिष्ठबौधायनादीनां दिव्यप्रतिज्ञानां धर्मशास्त्र प्रयोजकानां तपःपरमपूतानना रविन्दनिःसृता त्रिविधतापविना-शिनी मनःप्रकाशिनी वाक्ततिर्विद्योतमाना, समास्ते। बीजं चा-स्त्विदमेव प्रतिभाति। या हि येषां भाषा ते तयैव व्यवहरन्तीति नियमः। यथा पिशाचाः स्वकं संकेतं पुरस्कृत्य पैशाचीमुदाहरन्ति पशवः पक्षिणः सरीसृपाश्च निजभाषयैव स्वकीयाशयं प्रबोध्य मोदन्ते तथैव, दिव्यशक्तिसंपन्ना देवाः "अत एव च नित्यत्वम्" इति, १। ३। २९। उ० मीमांसासूत्रानुसारतः आदिसृष्टिसमय-प्रबोधितनित्यत्वेन एव निखिलं व्यवहारजातं संस्कृतवाचि प्रदर्श-यन्तोऽनुष्ठितयागादिसाधनानां साधकानामीप्सितं सम्पादयन्तो-ऽन्योऽन्यमुक्तिप्रत्युक्तिरूपेण व्यवहरन्तश्च वाचमेतामेव स्वकीयां सा धुवर्णयन्ति यथा—'स्वर्भानुर्हवा आसुरिः सूर्यं तमसा विव्याध" इति माध्यन्दिनीं श्रुतिमनुसृत्य सूर्यग्रहणविषयो वैदिक इति संसाधयितुं "यं वै सूर्यं स्वर्भानुस्तमसा विध्यदासुरः" इति ऋ० ५। ४०। ९। प्रोक्तम्। तथैव कात्यायनश्रौतसूत्रे "ब्रह्मा पृच्छति होतारं यूपमभितः कः स्विदेकाकीति" प्रश्नानुसारतः शुक्लयजुर्वेद-संहितायां त्रयोविंशेऽध्याये नवम्यां दशम्यां चर्चि प्रश्नप्रतिप्रश्न-रूपः सम्वादो निभालनीयः।—कः स्विदेकाकी चरति क उ स्विज्जा यते पुनः। किं स्विद्धिमस्य भेषजं किं वा वपनं महत्। उत्तर-स्वरूपा ऋक्·सूर्य एकाकी चरति चन्द्रमा जायते पुनः। अग्नि-र्हिमस्य भेषजं भूमिरावपनं महत्। एवमेव शतपथब्राह्मणे प्रयो-

दृष्टे काण्डे—एतेन ह इन्द्रोतो दैवापः शौनकः जनमेजयं पारिक्षितं याजयाञ्चकार । तेनेष्ट्वा सर्वां पापकृत्यां सर्वां ब्रह्महत्यां जघान, सर्वां हवै ब्रह्महत्यामपघ्नन्ति योऽश्वमेधेन यजत इति परीक्षितसूनो र्जनमेजयस्याश्वमेधीयमैतिह्यमुपलभ्यते । षडङ्गस्य भगवतो वेदस्य "ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते" इति शिक्षाप्रमाणेन ज्योतिःशास्त्रं नयनस्थानीयमुपवर्णितम् । तदीयसिद्धान्तानुसारेण यदा जन्मपत्रिकायामब्दपत्रिकायाञ्च ग्रहाश्चिकस्थानगा मारकेशा रन्ध्रेशाश्च भूत्वा अनिष्टफलप्रदा भवन्ति तदा तज्जनितानिष्टपरिहृत्यै "शान्त्या प्रशमनग्रहाः" इत्यभियुक्तोक्तेर्ग्रहशान्तिर्विधीयते मानञ्चात्र "शन्नोग्रहाश्चान्द्रमसाः शमादित्याश्च राहुणा" इत्यथर्ववेदीय १९ । ९ । १० । कण्डिका बोद्धव्या । देवप्रवरस्य कश्यपस्यांशसंभूतत्वेनादितेयत्वेन च सूर्यादयोऽपि खगा देवशब्देनैव व्यपदिश्यन्ते । एतदीयशान्तिविधानस्य संस्कृत एव वर्णितत्वेन संस्कृतदेवभाषेति निःसंशयं मन्तव्यम् । "विद्वाᳬसोहिदेवा" इति श्रुतेरधीतवेदवेदाङ्गादिषु विद्वत्सु अपि देवशब्दस्य प्रयोगदर्शनात् "प्राधान्येन व्यपदेशा भवन्तीति न्यायात् देवयोनिषु मुख्यया वृत्त्या संस्कृतस्य प्राधान्येऽपि विद्वन्मानवादिप्रयोजनीयत्वेनेतर भाषाजननीत्वेन चास्य राष्ट्रभाषात्वमपि संसिद्धम् ।

"सोऽहं भगवः शोचामि तं मा भगवान् शोकस्य पारं तारयतु" इति छान्दोग्योपनिषदि सप्तमप्रपाठकस्य प्रथमखण्डे नारदोक्तिमाकर्ण्य तस्यैव प्रपाठकस्य पंचविंशे खण्डे-"तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमारः" इत्यभिहितम् । "तद्धैतत् पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च" इत्यारण्यकश्रुतौ ऋषिप्रवरवामदेवकर्तृकं मनुसूर्यभवनं स्फुटं गदितम् । इत्थं निखिलस्यापि देवकर्तृकस्य व्यवहारस्य संस्कारसमेधितसंस्कृतभाषायामेव प्रतिपादितत्वेन संस्कृतमेव देवभाषेति स्थालीपुलाकन्यायेनप्रदर्श्य प्रणम्य चेष्टदेवतां श्रीमहेशानीं विरमामीति शम् ।

"दुर्वार्य्यविघ्नततिभिः प्रविहन्यमानान्—
हीनानरं द्रविणराशिभिरात्मनिष्ठान् ।
कालीप्रसादविबुधान् बुधवर्गमृग्यान्,
सत्संस्कृतोन्नतिकरानवतान्महेशी ॥१॥
"संस्कृतं" राष्ट्रभाषा स्यादिति संकल्पमादृतम् ।
तूर्णं पूरयताद्देवी निहत्य निखिलापदः ॥२॥

———

## संस्कृतभाषामहत्त्वं तत्प्रचारोपायाश्च ।

ले०—वि० भू० बालकृष्णभट्ट शास्त्रि साहित्याचार्यः काव्य-
तीर्थश्च, टिहरी, गढवाल ।

अयि प्रेष्ठाः ! पाठकमहाभागाश्च जानन्त्येव भवन्तो यद् भाषाबहुलेऽप्यस्मिन् संसारे संस्कृतभाषैव सर्वभाषाणां जननी, आद्या, सनातनी, सर्वाभ्योऽतिप्रशस्यतमेति सर्व एव भाषाविवेचकास्तारस्वरेण स्वीकुर्वन्ति विपश्चितः । एतस्याः शब्दराशिः साहित्यसम्पत्तिश्चाद्वितीयेति निर्विवादम् ।

सर्वज्ञानविज्ञानमूलाः श्रीमन्तो वेदा अपि—अस्यामेव सुरभारत्यां विराजन्ते । औपनिषदं ज्ञानं, आर्हतानि दर्शनशास्त्रा-

न्यस्यामेव । एवं मन्वादयो धर्मशास्त्रीयग्रन्थाः, नीत्यादयो विविधनिबन्धाश्चाप्यत्रैव राजन्ते । यद्यपि—अन्यास्वपि भाषासु सन्ति शतशो निबन्धा विविधाश्च ग्रन्थाः, परं यया रीत्या यादृश्या सरण्याऽत्र लिखिताः सन्ति न तया रीत्या तादृश्या सरण्याऽन्यासु भाषासु । तथापि तत्र यत्किञ्चिद्विलिखितं तदपि संस्कृतभाषामुपजीव्यैव लिखितमिति सर्वेषां विदुषां युक्तं कथनम् । अथ-चैतस्याः, एकस्माद्—शब्दात् अनेकेषां शब्दानामुत्पत्तिः प्राचीन-प्रतिष्ठितभाषास्वपि । उक्तञ्च केनचित् "देववाणी महावाणी ह्यात्म-संस्कारहेतुका । वर्णलिङ्गविधानञ्च यस्यां सत्कर्मणां गतिः ॥" संस्कृतभाषा न केवलं भारतीयभाषाणामेव मातृभूता प्रत्युत ग्रीक, लैटिन, प्रभृतीनामपि जन्मभूमिर्मन्यते । अत उक्तञ्चापि "नहि केऽपि गताः श्रेयं संस्कृतविद्यया विना । संस्कृतं सर्वशास्त्राणां प्रवेशकं निगद्यते" संस्कृतभाषैवाऽखिलजगन्निर्मातुः सच्चिदानन्द परब्रह्मण आस्यान्निस्सृताः सैव च स्वाप्रतिहतललितसामर्थ्यसौन्दर्य्यं गिर्वाणानां हृदि संचार्य लोकत्रयं शासितुमारेभे तत्स-हाय्यं प्राप्यैव देवगणा मन्वादयो राजानश्च निग्रहानुग्रहपरा अखिललोकशासनाय बहुनीतिनियमान् विस्तार्य्याऽनायासेनैव सकलचराचरान् नीतिवश्यान् अकार्षुः किमन्यत् । सत्यं हि यादृशी समुन्नतिः समृद्धिश्च संस्कृतभाषाया हिन्दूनां कृतास्ति, तादृशी समुन्नतिर्न कयापि शक्यते भाषया चेति । तदुक्तमपि "ये पुनः मान्यप्राचीनाः पराऽस्मद्वंशजास्स्मृताः । ते निग्रहैर्नैव प्रसिद्धिं समुपागताः" विदुषां धारणैषा यूरोपीयभाषा-तत्वविद्भिरपि संस्कृतभाषायाः कृपयैव भाषातत्त्वमबोधि । जर्मनीयहर्हिटलरोऽपि उच्चैरुद्घोषयति, अस्माकं सन्मिलितं त्सर्वं संस्कृतविद्ययैव । सम्प्रति यूरोपे इदमपि विदितं चरमभूद् यद् भाषाया लक्षशब्दानां व्युत्पत्तिरपि, अल्पैरेव शब्दैर्ज्ञायते, परमत्र तु सहस्रत्रयवर्षेभ्यः पूर्वमेवेदं ज्ञातमासीत् । अस्यां भाषायां यादृशं धातूनामस्तित्वं वरिवर्ति तादृशं नान्यत्र, संस्कृते

एषाऽपि विचित्रताऽस्ति, यद्त्र जना यादृशं शब्दान् उच्चारयन्ति तादृशं लिखितुमपि शक्नुवन्ति एकैव वार्ता बहुप्रकारेण कर्त्तुं शक्यते। एतेषां सर्वेषां कारणमिदमेवास्ति, एषा भाषा सर्वभाषामूलभूता सर्वांशपरिपूर्णा, अन्याश्चांशिकात्रुटिपूर्णाश्चेति न केवलं भारतीयविदुषामेवान्वेषणम्, प्रत्युत पाश्चात्यविपश्चिदोऽपि—एकस्वरेणेदं स्वीकुर्वन्ति। अत एव सर्व एव दार्शनिका वैज्ञानिकभावुकाः कविकुलशिरोमणयश्च संस्कृतभाषाया विमलगुणेषु विमुग्धाः समासक्ताश्चाभूवन्। स्वेषु ग्रन्थेषु च तेऽपि स्पष्टमुद्घोष्य कृतार्था यद् हिन्दव एवोच्चविद्यानां जन्मदातारः सर्वकलाकोविदश्चेति। कीदृशं युक्तमुक्तं केनचित्कविना—"भाषाणां मातृभाषाया ज्ञातृणां मातृ वत्सदा। आत्मशुद्धिः कुबुद्धीनां शास्त्राणां परमागतिः॥" सर्वमिदं-परं हन्त! संस्कृतप्रचारेऽस्माकं तत्परता नाद्यप्यालोकयते किमतः परमधिकं कष्टास्पदम्। परञ्च भोः! अभ्युन्नतिकांक्षिणः? संस्कृतप्रचारसुव्रताः! विद्वद्वराश्च स्मरत यूयं द्वाविंशतिकोटिसंख्यका मानवा यां जातिमाश्रित्य-अपरिसंख्येयसहस्राणि वत्सरान् अतीतान् व्याप्य पुरुषपरम्परया सर्वतोभावेन च जीवन्ति, तस्या मनुष्यजातेः प्राचीनं गौरवं वैभवञ्च संस्कृतभाषाप्रचारमन्तरेण न कथमपि स्थिरीकर्त्तुं शक्यते। तथाहि "प्राचीनं गौरवं विद्यां, वैभवं शान्तिमात्मनि। सैव बोधयितुं शक्ता, भारती सुरभारती" अतः सर्वभाषां निर्मोकमिव विहाय प्रथमत आरभ्य यावज्जीवं निःसंशयं-संस्कृतविद्यामेव स्वाङ्गमिव रक्षत अधीध्वं चेति। तदर्थञ्चेदानीं तत्प्रचारकरणस्य महदावश्यकम्। निश्चितमेव प्राचीनसभ्यतासंरक्षणाय हिन्दूसंस्कृतेरस्तित्वस्थिरीकरणाय हिन्दूजातेः समुन्नत्यै संस्कृतभाषाप्रचारं विना नान्यदस्ति किञ्चित्साधनमतस्तत्प्रचारोऽनिवार्य एवेति केचन तत्प्रचारोपायाश्चात्र स्वमत्योपन्यस्य सर्वप्रथमं परिवर्तनशीलेऽस्मिन् संसारे यथा सर्वमेव वस्तुजातं परिवर्तते तथैव संस्कृतशिक्षापरिवर्तनमपि मुख्यम्। परं हन्त! सम-

नुसारं संस्कृतशिक्षायां परिवर्तनं नमावलोक्यते, अतः शिक्षायां
समयोचितपरिवर्तनस्य महती आवश्यकता । तदर्थञ्च सर्वतः
पूर्वं परीक्षाप्रणाली सुधारणीया तत्राधुनिकोचिता एव सद्ग्रन्थाः
स्थापनीयाः भूगोलादिविषयान्तराणामपि समावेशोऽत्यावश्य-
कस्तत्र । तेन स्वजातेः सभ्यतायाश्च-एवं स्वधर्मस्य स्वदेशस्य
स्वाजीवनोपायादेश्च सकलं ज्ञानं ध्रुवं भवेत् । तदर्थञ्च बाल-
केषु सरलसरसकथादीनां ग्रन्थानां संग्रहः कर्त्तव्यः । येन बालवि-
नोदेन सह देशभक्तिरुदयेत धर्मे श्रद्धा वर्धेत, पापान्मनो
विरमेत् । सत्ये निष्ठा, विपत्सु धैर्यं जायेत । एतादृशाश्च ग्रन्था
गद्येन पद्येन रचनीयाः । हिन्दी अपरप्राइमरीस्कूलादारभ्य हिन्दी
मिडिलस्कूलपर्यन्तमेतादृशानामेव ग्रन्थानामध्ययनपरिपाटी व्य-
वस्थापनीया तदूर्ध्वमपि तदनुसारमेव ज्ञानविज्ञानकलाकौशलदेश
भक्तिभावोद्भावितानां ग्रन्थरत्नानां समावेशो विधातव्यः ।
संस्कृतसमाचारपत्रपरिशीलनरुचिरपि प्रथमत एवोत्पादनीया
बालकेषु । अध्यापकैश्च प्रारम्भिकशिक्षाप्रदानकालत एव छात्रेषु
परस्परं प्रतिक्षणं संस्कृतभाषणस्य नियमो व्यवस्थापनीयः ।
तत्र २ च पाक्षिकी मासिकी वा वाग्विवर्धिनी सभा अपि स्था-
पनीयाः, यत्र छात्राः केवलं संस्कृतभाषामाश्रित्य भाषणं कुर्युः ।
मित्रादिभिः सार्धं पत्रव्यवहृतौ संस्कृतभाषैव व्यवहर्तव्या । प्रति
प्रान्तस्य प्रधानकेन्द्रे एकसंस्कृतसाहित्यसम्मेलनमप्यावश्यक-
म् । यच्च प्रान्तस्य संस्कृतप्रचाराय सर्वदा प्रयतेत एवमेवैकस्य
संस्कृतमण्डलस्यापि स्थापनमावश्यकम् । यो हि संस्कृतज्ञानां जी-
विकानिर्वाहाय न्यायालयादिष्वपि स्थ नोपलब्धिं कर्तुं शक्नुयात्
येन संस्कृतज्ञानां सत्वरं जीविकानिर्वाहचिन्तामपगच्छेत् । यथा
विद्यालयानामभिवृद्धिरनिवार्या तथैव दैनिकसाप्ताहिकसंस्कृतप-
त्रिकाणामपि चावश्यकता । केवलञ्च भाषाप्रचारदृष्ट्यैव स्वल्पस्वल्पैः
वाक्यैरतिसुगमया रीत्या गूढग्रन्थानां सारमादाय कथारूपेण नूतन
ग्रन्थानां ग्रन्थनमित्यादयः सन्ति शतशः उपायाः संस्कृतप्रचाराय ।

# संस्कृतभाषयैव भारतोद्धारः ।

( ले० वैद्यराज पं० श्री गुलराज शर्मा,
आयुर्वेदशालाचार्यः नागपुरम् )



यि भो ! अमरभारतीविभवविकासविलासविभोगविशुद्धान्तःकरण वचनरचनाचतुराः, संस्कृतोद्धारैकसन्नद्धबद्धपरिकराः, शारदापदसरोजरजनिदिवम् गुचर्यमाणाः सुविपश्चिद्विचक्षणचणाः सन्तो महान्तो विद्वांसः !

सुविदितमेवास्ति श्रीमतान्तत्र भवतां धीमताम्भारतभूनिर्जराणाम् यदिदानीं करालेकलिकालेऽस्मिञ्जगतीतले समवाप्ते च परकीयानाम्भारतधर्मध्वंसकानां स्वदेशवेषभाषाभूषारीतिनीतिविज्ञानज्ञानाडम्बरचाकचक्यवशीकृतभारतभूभुजां भूसुरतनुजनुष्यामेवञ्च सर्वसाधारणवणिगादिकृषकवपुषां राज्ये सर्वतो नष्टप्राया एव भान्ति सनातनवर्णाश्रमधर्माचारादयः । भारतवर्षेऽधुना सनातनादिधर्माणामभावो यत् समुदञ्चितः समुचितोऽवलोक्यते लोकैस्तत्संस्कृतभाषाया अध्ययनाध्यापनादिप्रचाराभावादेवेति मन्ये । नाविदितं कैश्चिदपि भारतधर्मविद्भिर्यद्धर्मरुहेयं भारतभूः । अस्या जीवनभूतस्य धर्मस्य नाशेऽस्यापि नियतो नाश इत्यपि स्फुटमेवास्ति तत्र भवताम् । अतो जगतो मूलं धर्मो, धर्मस्य मूलं संस्कृतभाषेति सार्वत्रिको राद्धान्तो वरीवर्ति ।

जानन्ति सर्वेऽपि सुरसरस्वती सरससुधाऽऽस्वादनप्रणयपीवराङ्गा भारतभूसुरपुङ्गवा भवन्तो यदतीतानि गाढनिद्रायाः सुदिनानि तेषु शयनशय्यातलशयानैर्बहुश ✕ काल ✕ कवलीकृतः श्रीमद्भिः । परमिदानीमालस्यवशः

शयनस्य किन्तूत्थानस्य। अतः सर्वेऽपि सर्वत्र सर्वतोभावेन स्वस्वसुषुप्तिं परिहरन्तो जनेषु विसम्वादं परित्यजन्तो भारतोद्धारार्थं प्रसारार्थञ्च गीर्वाणवाण्या दत्तावधाना॰ कटिबद्धा भवेयुरितिहृक्प्रत्ययोऽस्माकं भारतीयानाम्। साम्प्रतं संस्कृतभाषायाः सातत्येन मृतभाषेतिसम्बोधनैः सम्बोध्यैव विरमन्ति भारतीया इति महल्लज्जास्पदं दुःखप्रदञ्च। विब्रुवन्त्यपि यदमरगीरियं न कदापि मृतभाषाशब्दभाग् भवितुमर्हति। किन्तु स्वभावदुर्विपाका अनात्मवन्तो जनाः, यथा राजा तथा प्रजेति समादधानाः सन्तः स्वकीयाममरगिरां परित्यजन्त आजन्ममरणावधि परतन्त्रताऽर्गलायां स्ववपुषं निगडयन्तीमांग्लगिरां सुतरां नैरन्तर्येण पठन्ति पाठयन्ति च स्वकलत्रपुत्रपुत्रीप्रभृतिकान्, नैतदुचितमिति भारतभूगर्भजानां कृते किञ्च भारतोद्धारो यथा भवेत्तथैव यतनीयम्। भारतोद्धारस्तु संस्कृतभारत्यैव भवितुं शक्यते नान्यथेति मन्ये। किन्त्वाशङ्का भवितुमर्हत्यत्र किं कारणमिति किमन्या भाषा लोके न सन्ति याभिर्भारतोद्धारो भवेत्।

अतोऽस्माभिः स्पष्टं शक्यते वक्तुं यद्येन वस्तुना यस्योन्नतिर्भवितुं पार्येत तदपि वस्तु सर्वभावैर्भूयिष्ठं विनिविष्टमेवातिशयेन भाव्यमिति। नो चेत् स्वयमेव बुभुक्षितमूर्लोधपञ्चवः किं शक्यन्तेऽन्यं कञ्चन भोजयितुमध्यापयितुं दर्शयितुमुल्लंघयितुञ्चेति न कदापि। यतो एषैवामरगीर्या सर्वभाषाणां जननी समस्तसाहित्यानामुत्पादयित्री जगति ब्रह्मक्षत्रियविट्शूद्राणां धर्मकर्मविभाजयित्री स्वे स्वे कर्मणि च विनियोजयित्री। अनया भाषयैव समजनि प्राक् लोकस्थितिरपि। अद्यावधि च तन्त्रतन्त्रितैव प्रचलति किञ्चित्किञ्चिदिति नाविदितमागमविदां विदुषाम्। यतोऽधुनापि यत्र तत्र संस्कृताध्ययनस्य यदभावो दरीदृश्यते तेनैव हेतुना भारतवर्षस्य दैनं दिनं हीनावस्थैव सम्पद्यते। संस्कृतविद्याया अभावादेव ब्राह्मणबालिकाः श्वपचैः सार्धं स्वोद्वाहं विदधति। प्रधानकारणञ्चास्य संस्कृतभाषाविरहिताधर्मशिक्षास बहुतरोऽभ्यासो निकटावासश्च पारस्परिको विद्यालयेष्वाधुनिकेषु कालेजाख्येषु। किन्तु संस्कृतशिक्षास्याद्ये संस्कृतज्ञास्तथा कर्तुं कुतो नेच्छन्तीत्याशङ्कायां विपदास्ति तेषां स्मृताज्ञा। यथा—

मात्रा स्वस्रा दुहित्रा वा न विविक्तासनो भवेत्।

CC-0. Jangamwadi Math Collection, Varanasi.

बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति॥

पद्येनानेन पर्य्यालोच्यते यत्संस्कृतज्ञेभ्यो मातृस्वसृदुहित्रादिषु, अथैकान्तवासो न सम्यग्रोचते तर्हि का पुनः कथा परस्त्रीषु मूर्खाणामिति। संस्कृतभाषायाः प्रभावेणैव भूमण्डलस्य शिखरीभूते भारते खण्डे सर्वत आधिक्येन धर्मधनधैर्यधौर्यधीधारणाशौर्ययोगसमाधिशौचाचारकलाकौशलविद्याविनयनीतिरीत्यादयो विद्यन्त आसन्नपि। नान्येषु केष्वपि खण्डेषु संम्भाव्यत ईदृग्वैभवम्। अत एव विश्वम्भरायामस्यां वसुन्धरायां भारतभूरेव देवानामपि चेतसि परमरमणीयं विमलं स्थानमासीदस्ति च। अस्मिन्नेव वशिष्ठविश्वामित्रादयास्त्रिकालवेत्तारो महर्षयः समभूवन् येषामाज्ञयैव विधिविधानमपि जाजायते स्म। अत्रैव च जगदुत्पत्तिस्थितिलयकारणभूतस्य भगवतः परमपितुः परमेश्वरस्य लीलाविग्रहवतः श्री विष्णोः परित्राणाय साधूनां विनाशाय च दुष्कृतां धर्मसंस्थापनार्थायाऽनेकेऽवतारा भारतावनावभूवन्। तंथाऽस्मिन्नेव भारते भारतधर्मसंस्थापनाय संवृत्ते महाभारताह्वये भारताय दुर्योधनादिदुष्टावनिपकन्दनाय नन्दनाय च युधिष्ठिरादिधर्मात्मनामुपदिशति भगवान् श्रीकृष्णो गीतायाम्—

"कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम्।
अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन॥
क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते।
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परन्तप"॥
"स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि।
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते॥"
"अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि।
ततः स्वधर्मं कीर्त्तिं च हित्वा, पापमवाप्स्यसि॥"

इत्यादिभिः सधर्मोपदेशैः संस्कृत-भाषानिबद्धपद्यैरर्जुनं स्थिरीकृत्य कृतोद्धारो भारतवर्षस्य भगवता श्रीकृष्णेन। एवं भगवता श्रीपतञ्जलिनाऽप्यमरभारतीद्वारेणैवोपकृतं भारतवर्षमित्यनेन निम्नोद्धृतेन पद्येन विज्ञायते।

"योगेन चित्तस्य पदेन वाचां मलं शरीरस्य च वैद्यकेन।
योऽपाकरोत्तं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलिरानतोऽस्मि॥"

अथ च प्राग् यदा संस्कृतभाषायाः प्रबलः प्रचार आसीत्तस्मादेव भारतस्य परमोन्नतिरप्यभूत्। परमिदानीं "पतनान्ताः समुच्छ्रयाः" इत्येवसिद्ध्यत्यमर भारत्या भारतेऽभावात्।

सपरिचया भवन्तो विज्ञा यदियमेव सुरभारत्यस्मद्भारतवासिनां संरक्षणे स्थिता तिष्ठन्ती च पुराऽधुनाऽपि। तस्मादेवास्या आकरभूतेषु वेदेषु बहूनि खलु कल्याणकारीणि जगतो जनानाञ्च मन्त्राण्यपि विलसितानि सन्तीति। तेष्वेव जागतिकानां सकलचराचरजीवानां रक्षा तेषां कार्यन्तदुपार्जितवित्तस्य सूपयोगः एवञ्च कीदृशो राजा किञ्च तस्य कर्त्तव्यं प्रजा च कथम्भूता कथम्भूतञ्च तस्याः कार्यमित्यादि सर्वमपि वेदेषु समुपलभ्यते। यथा—

न ता नशन्ति न दभाति तस्करो नासामामित्रो व्यथिरा दधर्षति।
देवांश्च याभिर्यजते ददाति च ज्योगित्ताभिः सचते गोपतिः सह

इति ऋग्वेदे। एतेन जीवानां सार्वजनिकव्याधिवाधाभ्यो जायतेतरां सुतरां रक्षा परञ्च ज्वालाप्रपातातिवृष्ट्यनावृष्टि भूकम्पाशनिपातादिप्राकृतिकविप्लवेभ्यस्त्वीश्वर एव पालयिता। अतस्तमेव स्तुवीत इत्यपि वेदे। यथा—

मधुवाता ऋतायते मधुक्षरन्ति सिन्धवः।
माध्वीर्नः सन्त्वोषधीः। मधुनक्तमुतोषसो
मधुमत्पार्थिव ँ रजः। मधुद्यौरस्तुनः पिता।
मधुमान्नो वनस्पतिर्मधुमां अस्तु सूर्य्यः।
माध्वीर्गावो भवन्तु नः" इति यजुर्वेदे।

तथैव— 'यतो यतः समीहसे ततो नो अभयं कुरु
शन्नः कुरु प्रजाभ्योऽभयं नः पशुभ्यः" इति यजुर्वेदे।

अथर्ववेदेऽपि—अभयं नः करत्यन्तरिक्षमभयं द्यावा पृथिवी उभे इमे,,
इति। अन्यच्च—

द्यौः शान्तिरन्तरिक्ष ँ शान्तिः पृथिवी शान्तिरोषधयः शान्तिः।
वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्मशान्तिः सर्व ँ शान्तिः—
शान्तिरेवशान्तिः सामाः शान्तिरेधि। इति यजुर्वेदे।

समासत एभिर्मन्त्रैः प्राकृतिकवैयक्तिकसामूहिकव्याध्युत्पातादीनां प्रतीकारः समुपदिष्टः। परमिदानीं मनुष्येभ्यः समुत्पन्नविघ्नानामपहरणोपायान् प्रचक्ष्महे वेदमन्त्रैः मानवकृतोत्पाता अपि द्विविधा, सामाजिकाः शात्रवाश्च। अनयोः प्रतीकाराय राजव्यवस्थायाः समुचितः सुप्रयोगो विधेयः प्रजाभिः कुतो नोचेत्सुव्यवस्थिता राजशासनपद्धतिस्तद्विनिष्ट एव सम्पद्यते। अतः प्रजाभिर्यो निर्विवादं निर्वाचितो भवेत् स एव राजा राष्ट्ररक्षको कामं भवितुं योग्यः। तस्तं-राजानं प्रार्थनारूपेण प्रथमं जना एवं शिक्षीरन्। यथा—

"आत्वा हार्षमन्तरेधि ध्रुवस्तिष्ठा विचाचलिः।
विशस्त्वा सर्वा वाञ्छन्तु मात्व द्राष्ट्रमधिभ्रशत्॥
इहैवैधि माप च्योष्ठाः पर्वत इवा विचाचलिः।
इन्द्र इवेह ध्रुवस्तिष्ठेह राष्ट्रमुपधारय॥" इति ऋग्वेदे।

परमधुनेदमपि विचारणीयमेवास्ति किञ्च राष्ट्रपरिपालनाय राज्यासने कीदृशमधिरोहयेत्। यथा— अथर्ववेदे—

"भूतो भूतेषु पय आदधाति स भूतानामधिपतिर्बभूव।
तस्य मृत्युश्चरति राजसूयं स राजा राज्यमनुमन्यतामिदम्॥"

अमुष्मिन्मन्त्रे इदमेवास्ति प्रधानतमं वेदितव्यं यत्तदेव राजा राजशासनोपयोग्यो भवति यः स्वात्मानमपि प्रजाहितहेत्वर्थं जुहोति। यथा पुरा संस्कृतभाषाया राज्यशासनवेलायां समेऽपि राजानः प्राणादप्यधिकतरां प्रजां ररक्षुः। प्राक्काले वैवस्वतान्वये इन्दुरिव राजेन्दुर्दिलीपो बभूव। नियन्तुस्तस्य दिलीपस्य राज्ये प्रजाः पूर्वपरम्परागतमार्गं रेखामात्रमपि न व्यतीयुः।

यथा-रघुवंशे-"रेखामात्रमपि क्षुण्णादामनोर्वर्त्मनः परम्।
न व्यतीयुः प्रजास्तस्य नियन्तुर्नेमिवृत्तयः"॥

प्रजाभ्यः करग्रहणस्य तस्य हेतुः—

"प्रजानामेव भूत्यर्थं स ताभ्यो बलिमग्रहीत्।
सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः॥"

तस्य प्रजापालनस्यानौपम्यमाह—

"प्रजानां विनयाधानाद्रक्षणाद्भरणादपि ।
स पिता पितरस्तासां केवलं जन्म हेतवः" इत्यादिः ।

अहो साश्चर्यमयोऽयं कालः समापतितो यस्मिन्वयं भारतीयाः स्वामभरभारतीं सर्वभाषोत्तमां सर्वाङ्गपरिपूर्णामविचलसिद्धान्तवतीमविकृतभुवनत्रयीं समस्तविश्वभाषाखनीमखिलजनपावनीमाद्यामिति वेविदन्तोऽपीमां विहायान्यामपूर्णामधःपातिनीमांग्लगिरां सुतरामवलम्बमानाः स्मः सर्वतः । हा हन्त ! कियद्दुःखवहेयं प्रवृत्तिरस्माकं भारतीयानाम् । यां सुरसरस्वतीं जर्मन जापानप्रभृत्यन्यदेशीयाः सर्वोत्तमां मत्वा विदधत्यादरं गृह्णन्ति च स्वस्वविश्वविद्यालयेषु संस्कृतविभागद्वारेणे ति । अतो वयमेतेन "सन्निकर्षो हि मर्त्यानामनादरस्य कारणं" इति चरितार्थयामः । इति नास्माकम्भारतीयानां कृते योग्यतामावहति संस्कृतह्रासकारणम् । यतोऽद्य भारतावनौ नास्ति हिन्दुजातेः साम्राज्यन्तथाऽपि गीर्वाणवाणीयं स्वकीयमकाट्यकोटिप्राबल्यादेवामरभारतीति नाम्नः सार्थकत्वात् स्वभग्नावशेषसाहित्यसद्मनः प्रभावाद्विमलयशसां परमर्षिणामचरां कीर्तिमधुनापि गिरति । वेविदन्ति भवन्तो विद्वांसो यत् परेरस्मद्विनाशनायानेकशः प्रयत्ना अस्मन्मूलाधारसंस्कृतभाषानिबद्धानिबन्धान्विनाशयितुं परिचालिताः । कुतः कारणाभावात्कार्यस्याप्यभाव इति मत्वा कार्यभूतानामस्मद्भारतवासिनां संस्कृत-भाषैव कारणभूता किमधिकममरभारतीभारतयोरन्वयव्यतिरेकसम्बन्धोऽस्तत्तद्ह्रासात्तस्य ह्रासस्तद्वृद्ध्यास्तद्वृद्धिरिति नियतो व्यापारः इति ज्ञात्वैव शत्रवा मूलमुच्छेत्तुकामाः सम्भवन्ति । यथा पुरा अपि देवान् घ्नन्तुकामा असुरास्तेषां धर्मं संस्कृतसाहित्यञ्च नाशयन्ति स्म । तथैवेदानीमपि । अतः समेषामस्माकम्भारतविदुषां सर्वतः प्राक् संस्कृत-भाषायाः सर्वतो मुखोद्धारोऽपेक्षितस्तदुद्धारेणैवोद्धारो भारतवर्षस्येति शिवम् ।

—::०::—

# 'संस्कृतभाषायां निबद्धाः शिलादिलेखा मुद्रालेखाश्च'

निबन्धा–साहित्याचार्यो रामेश्वरशर्म्मा शास्त्री, विद्यालङ्कारः, मौलासरः, मारवाड़स्थः ।






विदितचरं विदितवेदितव्यानां विबुधोपमानाममरभारतीप्रणयिनाम् । यदेषा सुरसरस्वती सांसारिकान् जनानुद्धर्तुं भाषाविज्ञानं च शिक्षयितुं सर्वतः प्रथमं संसारपदव्यां समवतीर्णा । तदानीन्तना देवाः पूर्वदेवाश्चैतैनां भाषां व्यवजह्रुः । पशुपक्षिणः किमुत शाखाप्लवङ्गा अपि अनयैव भासमानया भाषया वाग्व्यवहारान् सम्पादयामासुः । भगवतः पवमतनयस्य कृते वाल्मीकिरामायणे सर्वशास्त्रपारङ्गतत्वं संस्कृत्रिमवाग्भाषित्वं स्पष्टत एव उक्तमास्ते ।

अस्या भाषायाः कृते समागतोऽयं भाषाशब्दोऽपि "सर्वजनैर्भाष्यतेऽसौ भाषा" इति व्युत्पत्तिबलादस्याः सार्वजनीनत्वं विद्योतयति । अतएव निरुक्तकारो यास्को भगवान् पाणिनिश्च यत्र तत्रैनां भाषामविशिष्यभाषा शब्देनैवोदाजहार ।

"इवेति भाषायाञ्च" नि० अ० १ खं० १

"नूनमिति विचिकित्सार्थीयो भाषायामुभयमन्वध्यायम्"

विचिकित्सार्थीयश्च पदपूरणश्च नि० अ० १ खं०१ 'अथापि भाषिकेभ्यो धातुभ्यो नैगमाः कृतो भाष्यन्ते' नि० अ० २ खं० २ "सख्यशिश्वीति भाषायाम् । ४ । १ । ६२ । भाषायां सदवसश्रुवः । ३ । २ । १०८ । तथाऽत्राबालवृद्धवनिताभिर्याभाष्यमाणा पूर्वमिय-

मेव वागासीदिति निस्सन्देहं निश्चीयते । पूर्वमस्याः स्वरूपमव्या कृतं स्यासीत् परन्तु पश्चादेषा शक्रादिव्याकरणकृद्भिः व्याकृता संस्कृता च सती "संस्कृतमित्याख्यां दधौ । तथाहि "वाग्वै पराच्य माकृताऽवदत्ते देवा इन्द्रमब्रुवन्निमां नो वाचं व्याकुर्विति सोऽब्रवी-द्वरं वृवैमह्यं चैवेष वायवे च सह गृह्य इति तस्मादैन्द्र वायवः सह गृह्यते तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्तस्मादियं व्याकृता वा गुच्यते । तै, स० ६का० ४प्र० ७अ० ७,३,७ न काचन प्राकृतिकी वाग् संस्करणात् संस्कृतत्वमापन्नेति भ्रमितव्यम् । "प्रकृतिः संस्कृतम्" तत आगतं प्राकृतमिति ज्ञातव्यं, कात्यायनादिभिस्तथैव सूत्रणात् ।

सैषा गीर्वाणवाणी पुरा न केवलं साम्प्रतमितपुस्तकमस्रुणो-दरस्थितैवासीदपितु सर्वत्र निखिलैर्मानवैः सादरं सस्नेहमुच्चार्यमाणा व्यवह्रियमाणा चासीदत एव प्राक्तनेषु सम्प्रत्युपलभ्यमानेषु दानपत्रशिलालेखेष्वियमेव संस्कृतवागुल्लिखितोपलभ्यते । पाठकानामतः सन्तोषाय कानिचिद्दानपत्राणि प्रकाश्यन्ते ।

प्रथमं तावत् धारानराधिपसुप्रसिद्धभोजमहीपतेः पितामहस्य परमारवंशोद्भवस्य वाक्पतिराजस्य दानपत्रतः-उक्तं च-

बहुभिर्वसुधा दत्ता राजभिः सगरादिभिः ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥
यानीह दत्तानि पुरा नरेन्द्रै, र्दानानि धर्मार्थयशस्कराणि ।
निर्माल्यवान्तप्रमितानि तानि को नाम साधुः पुनराददीत ॥
अस्मत्कुलक्रममुदारमुदाहरद्भिरन्यैश्च दानमिदमभ्यनुमोदनीयम् ।
लक्ष्म्यास्तडित्सलिलबुद्बुद चञ्चलाया दानं फलं परयशः परिपालनं च ॥
सर्वानेतान् भाविनः पार्थिवेन्द्रान् भूयो २ याचते रामभद्रः ।
सामान्योऽयं धर्मसेतुर्नराणां काले काले पालनीयो भवद्भिः ॥
इति कमलदलाम्बुबिन्दुलोलां श्रियमनुचिन्त्य मनुष्यजीवितं च ।
सकलमिदमुदाहृतं च बुद्ध्वा नहि पुरुषैः परकीर्तयो विलोकाः ॥

सं० १०३१ भाद्रपद सुदि १४ स्वयमाज्ञा... श्री कपर्द-

यकः । स्वहस्तोऽयं श्रीवाक्पतिराजदेवस्य ।

( २ ) कुरुकुलालङ्कारश्रीजनमेजयमहाराजस्य शासनपत्रतः श्रीगणाधिपतयेनमः"......" युधिष्ठिरशके प्लवङ्गाख्ये एकोननवति ( ८९ ) वत्सरे सहस्यमासि अमावास्यायां सोमवासरे—

दानपालनयोर्मध्ये दानाच्छ्रेयोऽनुपालनम् ।
दानात् स्वर्गमवाप्नोति पालनादच्युतं पदम् ॥
स्वदत्तात् द्विगुणं पुण्यं परदत्तानुपालने ।
परदत्तापहारेण स्वदत्तं निष्फलं भवेत् ॥

( ३ ) राष्ट्रकूटवंशोद्भवलाटदेशाधीश्वरकर्कराजमहीपतेर्दानपत्रतः "......" श्रीवलभीविनिर्गततच्चातुर्विद्यसामान्यवात्स्यायनसगोत्रमाध्यन्दिनसब्रह्मचारिब्राह्मणानवे भट्टसोमादित्यपुत्राय आङ्कोट्टक-चतुरशीत्यन्तर्गतवडपद्रक सिधानग्रामः, यस्याघाटनानि जम्बूवाविकाग्रामः, तथा दक्षिणतो महासेनकाख्यं तडागम् , तथा पश्चिमतोऽङ्कोट्टकम्, तथोत्तरतो वग्वाच्छग्रामः, एवमसौ चतुराघाटनोपलक्षितः सोद्रङ्गः सपरिकरः सभूतवातप्रत्यायः सदण्डदशापराधः सोत्पद्यमानविष्टिकः सधान्यहिरण्यादेयः सर्वराजकीयानामहस्तप्रक्षेपणीयः आचन्द्रार्कार्णवसरित्पर्वतसमकालीनः पुत्रपौत्रान्वयभोग्यः पूर्वप्रदत्तदेवदायब्रह्मदायरहितो भूमिच्छिद्रन्यायेन शकनृपकालातीतसंवत्सरशतेषु सप्तसु चतुस्त्रिंशदधिकेषु महावैशाख्यां स्नात्वोदकातिसर्गेण वलिचरुवैश्वदेवाग्निहोत्रातिथिपञ्चमहायज्ञक्रतुक्रियाद्युत्सर्पणार्थं प्रतिपादितः ।

( ४ ) श्री पुलकेशिनः शिलालेखस्यान्तिमांशः ।

येनाऽयोजिनवेऽश्मस्थिरमर्थविधौ विवेकिना जिनवेश्म ।
स विजयतां रविकीर्तिः कविताश्रितकालिदासभारविकीर्तिः ।

अधिकं दिदृक्षुभिः "इण्डियन आण्टिक्वेरी" इति नामके मुद्रिते ग्रन्थे ततस्ततः सङ्कलिता शिलादिलेखा अवलोकनीयाः । श्रीहनुमद्विरचितं "हनुमन्नाटकमपिपूर्वं शिलायां लिखितमासीत् तच्च

भोजनराधिपतेर्विदुषोऽधिगत्य प्राकाश्यतामुपनीतमिति प्रसिद्धमेव अधुनापि युगनत्वान्वेविभिरतिप्राक्तनाः शिलालेखा गवेषिताः । यैरन्धकारलीनं भारतीयेतिवृत्तं मानवानां दृष्टिपथो समवतीर्णम् ।

---

## संस्कृतभाषाया अभ्युदयोपायाः ।

ले० अमरनाथमिश्रः सा० व्या० शास्त्री, बरहज, गोरखपुरम् ।

—::*::—

श्रीमन्तो गीर्वाणवाणीप्रणयिनो विद्वांसः ! यत्सत्यं महदिदं सौभाग्यं महांश्चायमानन्दावसरो यत् श्रीमताम्प्रथितमहिम्नां विद्वद्धौरेयाणां गीर्वाणवाणीप्रणयिनां भवद्विधानां विदुषां पुरतः अद्य संस्कृतभाषाया अभ्युदयोपायम्परिशीलयितुमथाहं किञ्चिद् वक्तव्यम् प्रहतोऽस्मीति महीयान् मे हर्षविषयः । यद्यपि भवादृशां विपश्चितां सम्मुखे नाहं वक्तुं समर्थः किन्तु केवलं साहसमागम् , तथापि बालममां विज्ञाय अवश्यममैतद्धार्ष्ट्यं क्षन्तव्यं स्यादिति ध्रुवम्मे महान् विश्वासः । नास्त्यविदितं श्रीमद्भिर्यदति- चिरन्तनी खल्वियं संस्कृतभाषा । भारतवर्षस्यास्य प्राचीन इतिहासोऽस्यामेवनिबद्धो वर्तते । प्राचीनैर्ऋषिभिः पण्डितैश्चास्यामेव भाषायाम् ईदृशानि ग्रन्थरत्नानि विरचितानि ये भारतवर्षस्य गौरवं चिरस्थायि सम्पन्नम् । शब्दानां संख्यापि अन्यभाषापेक्षयाऽस्यामत्यधिका वर्तते । येन सर्वोऽपि मनो गतो भावकलापः सरलतयैव व्यक्तो भवति । संस्कृतभाषाया व्याकरणेन सह जगत्‌ कस्या

अपि भाषाया व्याकरणस्य समता नैव वर्तते। इयमेव सृष्टिकालात् भारतवर्षस्य राष्ट्रभाषा वर्तते। इति पूर्वमेव संस्कृतपत्रस्य राष्ट्र-भाषाङ्के सम्यग् विविच्य निर्णीतमस्माभिः। अत्र तु केवलं संस्कृत-भाषायाः समुन्नतिः कथं स्यादिति निर्णयो विषयः। तत्र प्रथमस्तु संस्कृतभाषायाः शिक्षाप्रणालीरेव परिवर्तनीया यतः कस्या अपि भाषाया प्रचाराय तस्या समीचीनयाः शिक्षाया आवश्यकता जायते। भाषायाः समुन्नतिर्ह्रासो वा शिक्षाधीनम्। भारतवर्षे च संस्कृतशिक्षायाम्महत्तरं दूषणं वर्तते प्रत्यहं वर्धते च। अतोऽवश्यमेव संस्कृतशिक्षायाः सुधारे ध्यानं देयं श्रीमद्भिः। भारत-वर्षे प्राक्तना विद्वांसः स्वल्पेनैव कालेन अतीव योग्या जायन्ते स्म, किन्तु तेषामेव वंशेषु समुत्पन्ना वयम् योग्यता कस्य पक्षिणो नामेति नहि परिचिनुमः। अत्र बीजन्तु—आर्षग्रन्थानामध्ययनाभाव एवास्माकं दृष्टिपथे समायाति। अस्माकञ्जीवनन्तु तानार्षग्रन्थान विहाय अन्येष्वेव ग्रन्थेषु व्यतिक्रामति, न वा कदाचित् आर्ष-ग्रन्थेषु कटाक्षविक्षेपं कुर्महे। शेखरकार उत भट्टोजिदीक्षितः अन्ये वा विद्वांसः शब्देन्दुशेखरम्, परिभाषेन्दुशेखरम्, वैयाकरणसि-द्धान्तमञ्जूषां, सिद्धान्तकौमुदीं वाऽधीत्य एतान् ग्रन्थान् विरेचु रथवा तानेवार्षग्रन्थान अष्टाध्यायीं, महाभाष्यप्रभृतीन् परिशील्य पूर्वोक्तान् ग्रन्थान् निर्ममुः। तेषाञ्च यादृशी योग्यताऽसीत् किमद्य तादृशी योग्यता जायते केषाञ्चिद् विदुषाम्? अन्यच्च साम्प्रति-का विद्वांसो मुधैव छात्रान् विविधासु आधुनिकैर्निर्मितासु टी-कासु परिभ्रामयन्ति। तत्फलन्तु मूलस्यैव विच्छेदो जायते। अत एतेषां ग्रन्थानामध्ययनमध्यापनं वा विहाय यदि आर्षग्रन्थाना-मेव पठनम्पाठनं वा भवेत् तदाऽशुतरमेव बहवो विद्वांसो भवि-ष्यन्ति संस्कृतभाषायाः प्रचारश्च आयासं विनैव स्यादिति।

२—अथ च संस्कृत विद्यालये छात्रान् पाठयितुन्त एवाध्या-पका नियोक्तव्या येषां योग्यता सर्वतो मुखी भवेत्। यतश्छा-त्रान् सम्यग् विषयान् विविच्य प्रबोधयितुं समर्थो भवेयुः।

साम्प्रतन्तु प्रथमामेवोत्तीर्य्य अध्यापयितुं प्रवृत्ता भवन्ति। तेन छात्राणां लाभस्थाने हानिरेव सम्पद्यते। अतो योग्या एव शिक्षका नियोक्तव्याः।

३-अध्यापकाश्च ये खलु छात्रा आयान्ति तान् सम्यक् परीक्ष्य येषां यादृशी योग्यता भवेत् तांस्तथाविधानेव विषयान् पाठयन्तु नाम, प्रथमं कठिनविषयाध्यापने सुकुमारमतयो बालका विमनसो भूत्वाऽध्ययनमेव विजहति।

४-किञ्चान्येषु विद्यालयेषु यथा एकस्यैव विषयस्य एकस्या एव कक्षायां एक एवाध्यापकास्तिष्ठन्ति तद्वदेव संस्कृतविद्यालयेष्वपि प्रबन्धो विधातव्यः। यतः संस्कृतविद्यालयेषु ३ एतावान् कुप्रबन्धो विद्यते यत्प्रवेशिकामारभ्याचार्य्यं यावत् एक एवाध्यापकोऽध्यापयति। श्रीमन्त एव विचारयन्तु यदेक एव शिक्षकः कथं प्रवेशिकामारभ्याचार्य्यं यावदध्यापयेत।

५-किञ्च संस्कृतभाषाप्रचाराय संस्कृतपरीक्षायामपि किञ्चित् परिवर्तनं कर्तव्यं स्यात्। तद्यथा—प्रथमायां खण्डद्वयम् कार्य्यम्, तत्र प्रतिखण्डम् पत्रद्वयम्। एवं मध्यमायामपि खण्डत्रयम्, प्रतिखण्डम् च पत्रद्वयम् मिलित्वा पत्रषट्कं स्यात्। तथा शास्त्रिपरीक्षायामाचार्य्यपरीक्षायाञ्च खण्डद्वयं कर्तव्यम् प्रतिखण्डम् पत्रद्वयम्. एवञ्च शास्त्र्याचार्य्यपरीक्षा ऽपि चतुर्भिर्वर्षैरेव सम्पन्ना भविष्यति। अथ च स्वल्पेनैव कालेन बहवो विद्वांसो भविष्यन्ति संस्कृतभाषाप्रचाराय यशःशीला इति।

६-प्रायश्च दृश्यते यत् ये जना धनशालिनो विद्यन्ते तेषां बालका आङ्ग्लभाषामेव पठन्ति ये खलु दीनाः स्वयमेव साहाय्यं दत्वा स्वबालकानध्यापयितुमसमर्थाः तेषामेव बालाः संस्कृतविद्यालयेषु सुरभारतीमध्येतुमाव्रजन्ति। संस्कृतपरीक्षासु च बहूनि शुल्कानि गृह्यन्ते। ये दीनाश्छात्रा वर्तन्ते ते परीक्षाशुल्कमेव दृष्ट्वा परीक्षातो विमुखा भवन्ति। ततश्च तेषामध्ययनमेव साधु न हि सम्पद्यते। एवमपि संस्कृतभाषायाः प्रचारे हानिरेव जायते। तस्मात्परीक्षा शुल्केऽपि लाघवं कर्तव्यम्।

७— ये छात्राः कस्य चित् विषयस्य मध्यमपरीक्षामुत्तीर्य्यं यद्यन्यविषयस्य मध्यमपरीक्षां दातुमभीहन्ते तदा प्रधानविषये एव परीक्षा ग्राह्या । न तु पुनरपि सर्वसाधारणविषयेषु—एवं सति महान् लाभो भवेत् । छात्राश्च बहुविषयाणां ज्ञातारो भविष्यन्ति ।

८—यदि कश्चन छात्रः कस्याश्चन परीक्षायाः कस्यचन खण्डस्य यस्मिन् पत्रेऽनुत्तीर्णो भवेत्तदा तस्मिन्नेव पत्रे तस्य परीक्षा ग्राह्या पत्रेषु न खलु सर्वेषु । किञ्च कश्चनछात्रः एकस्मिन् पत्रे यद्यनुत्तीर्णः अन्येषु पत्रेषूत्तीर्णस्तदा यस्मिन् पत्रेऽनुत्तीर्णस्तस्मिन् पत्रेऽन्यस्मिन् खण्डे च परीक्षां दातुमनुमतिं लभेत ।

९—काशीहिन्दूविश्वविद्यालये यथा नियमो वर्तते यत् विहारप्रान्तस्य क्विंसकालेजस्यान्यप्रान्तस्य वा प्रथममध्यमशास्त्रिपरीक्षासूत्तीर्णाश्छात्राः क्रमशः मध्यमशास्त्र्याचार्य्यपरीक्षासु प्रवेष्टुमनुमतिं लभन्ताम् सर्वत्रापि संस्कृतपरीक्षासमितौ ।

१०—एकस्मिन् वर्षे एकस्यैव विषयस्यैकस्मिन्नेव खण्डे परीक्षांदातुं शक्नुवन्ति छात्रा इति नियमेन परीक्षासमितेर्न कश्चन लाभो दृश्यते प्रत्युत योग्यानां छात्राणां हानिरेव सम्पद्यते । अत एकस्मिन् वर्षे विषयान्तरस्यापि अन्यस्मिन् खण्डे च परीक्षां दातुमनुमतिर्दातव्या ।

११—ये खलु छात्राः प्रथमश्रेण्यामुत्तीर्णा भवन्ति तेषु केषाञ्चन छात्राणां कृते पुरस्कारस्यापि प्रबन्धो विधातव्यः । अन्यासु परीक्षासु प्राय एवमेव नियमो वर्तते । तथा च संस्कृतविभागेऽपि यदीत्थं स्यात् तदा बहवो बालकाः संस्कृतमेव पठितुं प्रवृत्ता भविष्यन्ति ।

१२-किञ्च प्रथमतस्तु संस्कृतविद्यालया एव अल्पीयांसो वर्तन्ते तत्रापि निरीक्षकाणामभावेन सम्यक् कार्यसञ्चालनं न जायते । एकस्मिन् प्रान्ते एक एव इन्स्पेक्टरो विद्यते । कथमेक एवेन्स्-

पेक्टरः सकलप्रान्ते प्रतिविद्यालयं गत्वा साधु निरीक्षणं कुर्या- दिति भवन्त एव विचारयन्तु । तथा च यथाऽङ्गलविद्यालयानां निरीक्षणाय प्रतिमण्डलनि डि० इन्सपेक्टरः डिपुटीइन्सपेक्टरः सब् डि० इन्सपेक्टरो वर्तते। तथैव संस्कृतविद्यालयानामपि भवन्तु। अपि च संस्कृतविद्यालयानां निरीक्षकाः संस्कृतज्ञा एव भवन्तु, अन्यथा ये आङ्ग्लज्ञाः सन्ति ते संस्कृतविद्यायेषु किन्नाम निरी- क्षणम् कुर्य्युः। यत्र न्यायस्य, व्याकरणस्यान्यस्य वा विषयस्या- ध्यापने प्रवृत्ता भविष्यन्ति शिक्षकाः तदा मूक एव स्यादाङ्गलज्ञो- निरीक्षक इति ध्रुवमेव प्रतीयते ।

१३— तथा संस्कृतौ अन्यदपि एकं महद्दूषणं वर्तते यत् समितेः सर्वं कार्यं हिन्दीभाषायामेव आङ्गलभाषायाम्वा जायते । यदि संस्कृतभाषायाः प्रचारं समीहन्ते संस्कृतज्ञास्तर्हि आवश्य- मेवैतस्य प्रबन्धो विधेयो यदाशुतरमेव संस्कृतसमितेः सर्वं कार्यं संस्कृतभाषायामेव सम्पद्यताम् । संस्कृतज्ञा एव तत्र कार्यकर्तारो भवन्तु । येनानेकेजनाः संस्कृतमध्येतुं प्रवृत्ता भविष्यन्ति । यदि च संस्कृतपरीक्षासमितेरेव सर्वं कार्यजातमन्यस्यामेव भाषायां जायते तर्हि संस्कृतभाषायाः प्रचारः कथं स्यात् ।

१४—पुनश्च संस्कृतभाषाप्रचारार्थं सर्वेषु संस्कृतविद्यालयेषु संस्कृताध्यायिभिश्छात्रैरेकश्छात्रसङ्घः स्थापनीयः। तत्रावकाशदिव- सेषु सर्वेषामन्तेवासिनां संस्कृतयागिरा भाषणम् सम्पद्यताम्। अन्य स्मिन्नपि समये संस्कृतज्ञैः संस्कृते एव सर्वो वार्तालापः। कर्तव्यः। बालकानपि सरलसंस्कृतेन व्यवहरणीयम् किञ्च प्रतिमण्डलमेको महान् छात्रसङ्घः स्थापनीयः, यत्र सर्वेषामध्यापकानामन्तेवासि- नाञ्च तत्तन्मण्डलनिवासिना संस्कृतशब्दैनैव भाषणं स्यात्। एवं सति सर्वेषां जनानां हृदये संस्कृतभाषाम्प्रति महाननुरागः स्यात्। येन सर्वे जनाः संस्कृतभाषायाः समुन्नतिं कर्तुं समुद्यता भविष्यन्ति

१५—कस्या अपि भाषायाः समुन्नतिस्तदैव भवितुमर्हति यदि तस्या भाषायाः शिक्षणपद्धतौ राज्ञां साधु प्रबन्धो भवेत्,

एतदेव कारणम्वर्तते यत् प्रत्यहं हिन्दीभाषायां आङ्ग्लभाषायाञ्च प्रचारोऽधिकतरो दृश्यते। किन्तु संस्कृतभाषाप्रचारे न कोऽपि जना मनो निदधते। भारतीयानामपि नेतृणां कदाचन कटाक्षविक्षेपो संस्कृतभाषायां न जायते। अत एवेयम्प्राचीनतमा सुरभारती खिन्न-प्राया तिष्ठति। गवर्नमेन्टोऽपि यथाऽऽङ्ग्लभाषाप्रचाराय मनो विधत्ते न खलु तथा संस्कृतभाषाप्रचाराय। यद्यपि संस्कृतपरीक्षा वर्तते तथापि न तथा संस्कृतभाषाप्रचारोऽवलोक्यते यथाऽपेक्ष्यते। अतो भारतीयान्नेतॄन् गवर्नमेन्टमपि समभ्यर्थये यत् अवश्यमेव संस्कृतभाषायाः प्रचारे दत्तचित्तभवन्तु श्रीमन्तः। अन्यथा कथमपि संस्कृतभाषामन्तरा भारतवर्षस्य कल्याणं न भविष्यति। ये तु भारतवर्षस्येतिहासेऽनभिज्ञा वर्तन्ते किं ज्ञास्यन्ति किन्तु ये इतिहासवेत्तारः सन्ति तेऽवश्यं जानन्ति यत् यदा यदा भारतवर्षे संस्कृतभाषायाः प्राधान्यमासीत् तदा तदा भारतवर्ष उन्नतिशिखरे आरोहत्। यदा यदा संस्कृतभाषाया ह्रासो जायते तदा २ भारतवर्षमध एव पतति। अतः सर्वैरेव भारतीयैः संस्कृत-भाषाप्रचारे मनो देयम् येन पुनरपि भारतवर्षस्य प्राचीनं गौरवं समायातु नाम। अपि संस्कृतभाषाविद्वेषिणो मूर्खाः ! सुरभारती-प्रणयिनश्च न जानन्ति भवन्तो यत् संस्कृतभाषात एव भारतवर्षस्य गौरवमखिलभूमण्डले विस्तृतम्। इयमेव सा संस्कृतभाषा यया लिखिताः भारतीया ग्रन्थाः या भाषा वहति बहुसमयात् भारतीया-नामनन्यसाधारणीं योग्यताम्, या भाषा मधुरं गायन्ति पूर्वजानां चरितानि या भाषा प्रकाशयति भारतस्य नात्युज्ज्वलमपि मनोहरं स्वरूपम्, या भाषा प्रदर्शयति किमपि वर्त्म, येन गच्छन् जन आत्मन इष्टमभ्युपगन्तुं पारयति, या भाषा ज्ञानविज्ञानैकशरणानां महर्षीणां हृदयारविन्दाद् विनिःसृता, नन्वद्यापि समुद्घोषयति कीर्तिं भारतस्य या भाषा समुपदिशति किमपि निगूढं तत्त्वम्, या भाषा दूरमपनयति तमः सन्ततीः। सैव संस्कृतभाषा साम्प्रतम् दुर्जनानामुच्चावचैर्वचोभिरवहेलनां सहमाना प्रत्यहमधः पतन्ती

भारतम् विजहाति । तथापि न खलु भारतीयानां दुनोति चेतः । श्रीमन्तो महानुभावाः ? किन्न जानन्ति भवन्तो यत् धर्मप्रधानोऽयं भारतवर्षः यदा २ धर्मस्य हानिर्जायते तदा २ स्वयमेवपरमात्मा प्रादुर्भवति । तथा चोक्तम् गीतायाम्-यदा यदा हि धर्मस्य ग्लानिर्भवति भारत, अभ्युत्थानमधर्मस्य तदात्मनं सृजाम्यहं । परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय सम्भवामि युगे २ इति । किन्तु धर्मपरिपालनन्तु संस्कृतभाषायत्तम् । यदि संस्कृत भाषैव नस्यात् तदा [धर्मज्ञानमेव नस्यात । किञ्च न खलु संस्कृतभषातः भारतवर्षं एव गौरवमधिजगाम किन्तु भारतादन्ये ये देशास्तेऽपि संस्कृतसाहित्यं प्रमथ्य अखिलमहीतले गौरववैजयन्तीमधिष्ठिपत् यावन्तः खलुवैदेशिकाः सन्ति ते भारतवर्षमधिगत्य संस्कृतसाहित्यमेवात्मसात् कृतवन्तः । अन्यदेशीयाः सर्वेभ्यः साहित्येभ्यः संस्कृतसाहित्यमेव प्रशंसन्ति किन्तु ये किल भारतीयाः सन्ति ते तु मौढ्यात् तदेव दूषयन्ति । केचन गावोवाहिकास्तु ब्रुवन्ति यत् संस्कृतभाषा राष्ट्रभाषा न भविष्यति यतः तस्याः प्रचारो नास्ति । किन्तु परिगणनं जायताम् तर्हि संस्कृतभाषाध्यायिन एव अधिकं मेलिष्यन्ति । संस्कृतभाषायाश्च हिन्दीतोऽपि अधिकं प्रचारो वर्तते । इन्दानीन्तना मूर्खा कथयन्ति देववाण्यां वक्तुं सर्वजनाः समर्था न भविष्यन्ति किन्तु तानहं पृच्छामि यत् रे मूर्खा ? पूर्वं भोजराज्यकाले कुविन्दोऽपि वदति यत् काव्यं करोमि नहि चारुतरं करोमि यत्नात् करोमि यदि चारुतरं करोमि । अथवा काष्ठहारकोऽभिधत्ते यत् भारो न बाधते राजन् यथा बाधति बाधते, तर्हि कथमद्य सा सुरभारती सर्वसाधारणजनैर्व्यवहरणीया न स्यात् ? । अयि संस्कृतविमुखा बान्धवाः शीघ्रमपनयन्तु श्रीमन्तः स्वीयां व्यामोहसन्ततिम्, उन्मिलय च चक्षुषी पश्यन्तु यत् किं माधुर्य्यम् वर्तते संस्कृतसाहित्ये । अयि संस्कृतसाहित्यमधुपानपरायणा विद्वान्सोऽन्ये च देशसुधारका नेतारः ? शीघ्रतरमेव यतन्ताम् श्रीमन्तो यद् संस्कृतसाहित्यं त्वरया समुन्नतिपथमायातु येन

भारतवर्षः पुनरपि समुन्नतिपथमधिगच्छेत् । संस्कृतादेव भारतवर्षस्योद्धारो भविष्यति इति न खलु मदीयैव संमतिः किन्तु विचारशीलानां जनानां सर्वेषां सम्मतिः । अहं सर्वं खलु मनोगतम्भावं भवतां सम्मुखे न्यधाम् किन्तु श्रीमन्तो ननु वक्तृविशेषनिस्पृहा गुणगृह्या वचने विपश्चितः । इति सिद्धान्तमुररी कृत्य मामनुग्रहीष्यन्तीति मदीयो विश्वासः । अथ च संस्कृतभाषा प्रचारेऽवश्यम्मनो दास्यन्तीति मुहुर्मुहुः प्रार्थयामहे ।

---

## संस्कृतप्रचारसाधनानां विवरणम् ।

( ले० कर्णवीरनागेश्वरराव सं० मनीषी )

सुगुणमणिगणगरिष्ठाः ! साहित्यसेवानुरागिणः ! विद्वान्सः ! अहमत्र संस्कृतप्रचारस्य साधनानां विषये स्वानुभवेन वक्तुमुपस्थितो भवद्भिः क्षन्तव्यः । साम्प्रतम् संसारे भाषायाः स्वकीयायाः श्रीवृद्धये सर्वत्र यतमानाः संघस्थापन-परा विद्वान्सः समुपलभ्यन्ते । यस्मिन्देशे स्वभाषायाः प्रचारे कृतालसा विद्वांसो नूनं तत्र दारिद्र्यं निवसति । हन्त ! परमत्र वयं स्वस्याः संस्कृतभाषायाः प्रचारे मन्दादराः स्मः । महदन्याय एवायं स्वभाषां प्रति देशं प्रति च ।

संस्कृतमेवास्मद्भाषा । तं विना किमपि साम्प्रदायिकं न सिध्यति अस्माकम् । महामना गान्धिमहोदयेनाऽपि हिन्दूनां कृते

संस्कृतज्ञानस्यैव परमावश्यकतेति निर्धारितम्। सर्वेषां हिन्दूना-मस्माकं विश्वासोऽपि।

प्रचारायास्य निखिले भारतवर्षे "अखिलभारतवर्षीयसंस्थायाः संस्थापनमत्यावश्यकम्। यत्र देशस्य प्रमुखाः पण्डिताः सदस्यास्स्युः। समितेरस्या एकपरीक्षायाः संचालनं प्रथमं कार्यं भवेद्। परीक्षायामस्यां सरलताऽश्यं भवेत्। परीक्षेयं द्वित्रिभागेषु विभक्ता स्यात्। अत्र तादृशी शिक्षा देया ययाऽल्पकालेनैव पत्राणां वाचने लेखानां लेखनेऽभिरुचिः सामर्थ्यं च जायेत। मद्विचारे परीक्षाद्वारा परमोपकारः प्रचारे भविष्यति।

अधुना दक्षिण-भारते हिन्दीभाषायाः परीक्षायाः प्रचारः दृश्यते। सारल्येनैवात्राल्पसमयेन पुरुषाः स्त्रियश्च सुशिक्षिता भूत्वा लेखने पत्राणां वाचने च हिन्दीभाषायां पटुत्वमापद्यन्ते। यत्र कुत्राऽपि संस्कृतस्य परीक्षा विद्यतेऽपि च न तत्र सर्वसाधारणाना-मुपकारः। अतः पुनरपि ब्रूमो यद्येतादृशायाः संसंस्कृत-सरल-परीक्षायाः प्रचारस्यात्तदा नूनमल्पकालेन समस्तेऽपि भारते संस्कृतं सुप्रचारितं स्यात्।

प्रचारितायामप्यस्यामखिलभारतवर्षीयसंस्थायां प्रान्तीय-संस्थाया निर्माणः प्रचारश्च कर्तव्यः। अस्याः संस्थाया भवेदेतत् कर्तव्यम्-प्रान्तियभाषया साकं तद्द्वारा च संस्कृतस्य प्रचारः कर्तव्यः। अन्यथा सर्वसाधारणजनताः संस्कृतशब्दश्रवणमात्रेणैव महत्कठिनमिति कृत्वा संस्कृत-पठनाद् विरमन्ति। अतः प्रान्तीय-भाषामन्तरा संस्कृतस्य प्रचारो न सुकरः स्यात्

अखिलभारतीयसंस्थाद्वारा सर्वत्र संस्कृतस्य महिम्नः प्रकाशनाय संस्कृतभाषामयस्य पाक्षिकस्य मासिकस्य वा कस्य-चित् पत्रस्य प्रकाशनस्याप्यनुसन्धानं कर्तव्यं भविष्यति। तत्र लेखानामेतादृशानां संग्रहो भवेत् येन सर्वेऽपि लाभभाजः स्युः। कियन्तः पण्डिताः कठिनलेखनिर्माणेनैवात्मानं कृतकृत्यं मन्यन्ते।

एतेन न कश्चिदपि पत्राणां भाषाया देशस्य समाजस्य वा कश्चिद-प्युपकारः।

पत्रेऽस्मिन् सर्वेषां भारतीयविदुषां चरितानि यथावसरं शनैः २ प्रकाशनीयानि। येन सर्वेषु पारस्परिकी प्रेमभावनाऽन्योऽन्यपरिचयेन परिचिता स्यात्। एवम् ते सर्वेऽपि द्वेषभावमुत्सृज्य संस्कृतभाषायाः प्रचारे कृतसंनादाः स्युः।

पूर्वोत्पन्नानामपि विद्वद्वराणां वृत्तं यथासमयं प्रकाश्यमेव। अत्र अयोध्यास्थस्य "संस्कृत" मिति पत्रस्य सम्पादकमहोदयेन संस्कृतसंसारेमहदुपकारं कृतम्। अनेन 'विद्वद्वृत्तं' नामकं ग्रन्थमपि परिश्रमेण रचितम्। प्रकाशितश्च तावत्तस्य प्रथमः खण्डः। परीक्षायामपि एताहग्ग्रन्थानां संस्थापनं कार्यं येन विलुप्तवृत्तविदुषां समयादिनिर्धारणे सर्वेऽपि समर्थाः स्युः। पूर्वेषां सूक्तयोऽपि नष्टप्राया एव सन्ति ता अप्यत्र वहवो लभ्यन्ते।

अतः परं स्वकृतधार्ष्ट्यस्य क्षमायै विद्वान्सो मया सम्प्रार्थ्यन्ते। यतो यूयं दयालवः। इति

## संस्कृतादेव भारतशासनम्।

ले०—अलीउमरशाहः, पाण्डुचेरी।

धिषणानविद्याविगर्विताः सांप्रतिकवैज्ञानिकाः पूर्णविज्ञानवतां भारतवसुन्धारालंकारभूतानां पूर्वविपश्चिदां विज्ञानमविदन्तो निन्दन्त एव दृश्यन्ते क्वचित् क्वचिदिति एवमेव कतिपये

शिक्षितपाश्चात्यशासनपद्धतिका भारतीया अपि सुधारकंमन्या मनुयाज्ञवल्क्यादिनिर्धारितां विज्ञानपूर्णामखण्डभूमण्डलसमानं साधनफलां शासनपद्धतिमुद्घोषयन्तिमकिंचित्करामकिंचित्कराः। दृष्ट्वा दृष्ट्वा चेखिद्यते चेतः हन्त! कथमथ स्वपूर्वजानां सुसरलां शासनपद्धतीं यया वयमपि सुशासिता स्याम्, तामेव तेषामेव वंशजा हिन्दव एव दृश्यन्ते ऽपनयन्तः। यद्यपि सनातनीयं "सत्यमेवावशिष्यत" इति नियमेन स्थास्यत्येवेति परमेतेऽपवादभूताः स्वजीवनमपि दुर्भरं मन्स्यन्ते।

यतो भारतशासनं संस्कृतसाहित्याध्ययमन्तरा कथमपि न भविष्यति। आद्यावधि यावन्तोऽभूवन् शासकास्ते सर्व एव संस्कृतसाहित्यमालम्बितवन्तो भारतशासने। भारते बहुकालादेव बहवः सम्प्रदायाः प्रचलन्ति तत्तु सर्वे जानन्त्येव तेषां रक्षणमन्तरा कथमपि भारतं कश्चिदपि शासितुं नहि शक्नोति। तेषामेकीकरणप्रयासस्तु केवलं हृदयदौर्बल्यमेवाविष्करोति। संस्कृतसाहित्यावलोकनेन संदेह एवनावशिष्यते यदेषां सम्प्रदायानां संरक्षणेन सहैव भारतो मन्वादिसरण्या सुशासितः स्यात्। तया सरण्या कस्यापि कृतेनापि क्षतिरस्ति। मुसल्माना अपि नैव बाधिता स्युः। हिन्दवस्तु तां सरणीं स्वकीयां मन्यन्त एवाऽतो तेषां तु कथैव काऽपि।

ये तु सुधारकंमन्या वदन्ति पश्यन्ति च विपरीतानि। तत्रेदं बीजमवधार्यते—ये सन्ति यत्राऽनभिज्ञास्तेषां तत्राऽन्यथाप्रवृत्तिर्भवत्यवेति न तिरोहितं सचेतसाम्। इमे संस्कृतसाहित्यशून्यत्वं स्वकीयं स्वकर्मणैव निरन्तरं प्रख्यापयन्ति पूर्वेतिवृत्तमपीमे यदावलोकयेयुस्तदाऽवश्यमेव संस्कृतसाहित्यगौरवमवगच्छेयुः। हिन्दवोऽपि शाहाकबरस्य राज्यशासनस्य प्रशंसां कुर्वन्ति। तत्र किं बीजं, शाहाकबरेण संस्कृतशास्त्रमर्मज्ञाः प्रकाण्डाः पण्डितताः सबहुमानपुरःसराः स्वसभायां संरक्षिताः। तेषु पण्डितराजं

जगन्नाथं को न जानाति । स च संस्कृतसाहित्यज्ञानां मन्वादि-शास्त्रमर्मज्ञानां पण्डितानामादेशेनैव स्वशासनपद्धतिं भारतशासनाय सरलं चकार । तया शासनपद्धत्या कमपि संप्रदायमबाधयन्नेव निर्विवादं भारतं शशास । यद्यपि भारतीयास्तं विदेशीयमेव ज्ञात्वा क्वचिद् क्वचिदसम्मता पद्यासन् तथाऽपि तच्छासनपद्धतिं सर्वथा प्रशंसन्त्येव । एवं कदाऽपि संस्कृतं विना भारतः सुशासितो न भविष्यति । सुशासितश्चेत् संस्कृतादेव ।

आशास्ति पुनरपि भारतीयाः संस्कृतभाषोद्धाराय सर्वतो सर्वभावेन न स्वहितमन्विच्छन्तः प्रयतिष्यन्त इति विरम्यते ।

—::※::—::※::—

## संस्कृतं कथं राष्ट्रभाषा भवेत् ।

ले०—अमरनाथशास्त्री, संवरी, छपरा ।

—::०::—::०::—

अस्य निखिलभारतभूमण्डलस्य प्रत्येकभागेषु वर्तमानेऽस्मिन् नवयुगे संस्कृतभाषैव राष्ट्रभाषा भवेदिति मीमांसा सर्वत्र प्रसृता दरीदृश्यते ।

भारतस्य प्रतिप्रान्तेषु स्व-स्वप्रान्तीयभाषाः प्रचलिताः सन्ति । यथा मैथिली, गुर्जरी, वंगीया औत्थली, फारसीत्यादयः सर्वाः भाषाः व्यवहृता भवन्ति । एतासु सर्वासु भाषासु काचन

कापि भाषा राष्ट्रभाषात्वयोग्या नास्ति। यतः स्वप्रान्तीय-कार्याणि स्व-प्रान्तीयभाषायामेव सम्यग्रूपेण सम्पादितानि भवन्ति। अथ च यदा सर्व-प्रान्तस्था मानवाः एकत्रीभूता भवेयुस्तदानीम् कस्या अपि ऐकदेशिकभाषायाः राष्ट्रभाषात्वे नियुक्तकरणात् राष्ट्रस्य कार्यं कदापि सुचारुरूपेण न चलिष्यति।

राष्ट्रभाषाया अयमेव वास्तविकोऽर्थोऽस्ति यत् या भाषा समस्तराष्ट्रस्य प्रधानभाषा भवेदिति। यदा च सर्वप्रान्तस्था मानवा एकत्रोपविष्टास्स्युस्तदानीम् राष्ट्रस्य सम्पूर्णं कार्यं प्रधानभाषायामेव भवेत् सर्वे मानवाः यां भाषां व्यवहरेयुः सा भाषा राष्ट्रभाषानेति। यथा— यवनराज्यकाले राष्ट्रभाषा फारसी तथोर्दू आसीत्, परन्तु सर्वे मानवाः फारसीतथोर्दू भाषां न व्यवहरन्ति स्म। तदानीमपि प्रति प्रान्तस्थाः मानवाः स्व-स्वप्रान्तीयभाषायामेव-व्यवहारं कुर्वन्ति स्म।

अद्यापि वृटिशराज्ये अंग्रेजीभाषैव राष्ट्रभाषा अस्ति परन्तु सर्वे एव जनाः अंग्रेजीज्ञातारो न विद्यन्ते। अद्याऽपि स्व-प्रान्तीयकार्याणि स्वप्रान्तीयभाषायामेव भवन्ति।

भारतस्य प्रधानशिक्षा संस्कृतभाषायामेव भवतु यतोऽस्माकं वेद-पुराण-कर्मकाण्ड धर्मशास्त्रादीनि संस्कृतभाषायामेव सन्ति। तथा गीर्वाण-वाण्या अध्ययनेन हिन्दुसंस्कृतेस्तथा धार्मिकसत्तायाश्च सर्वथा रक्षणं पालनञ्च भविष्यति।

यस्याः भाषायाः अध्ययनेन स्वदेशीयसभ्यतायास्तथाऽऽचारादीनां यथेष्टज्ञानं न भवेत् तस्याः भाषायाः राष्ट्रभाषात्वस्याधिकारो नास्ति। तथा च सा भाषा राष्ट्रभाषायाः योग्या न भवितुमर्हति यस्या अध्ययनेन आत्ममर्यादा तथा आत्मगौरवं च प्रणश्येत्।

अथ यां भाषां सर्वे 'व्यवहरेयुः सैव भाषा राष्ट्रस्य प्रधान

भाषा भवेदित्यसंभवम् । अतो वयम् इच्छामो यत् संस्कृतभाषैव राष्ट्रभाषा भवेदस्यामेव राष्ट्रस्य सर्वाणि कार्याणि भवेयुः।

सम्पूर्णभारते प्रस्तुता अपि हिन्दीभाषा राष्ट्रभाषा नास्ति। वड़ौदा-ग्वालियरादिराज्ये स्वभाषया भाषायां सत्यामपि हिन्दैव राष्ट्रभाषा अस्ति। यदा समस्तभारतस्य संस्कृतमेव भाषा स्या-त्तदैवास्माकं कल्याणं नान्यथा। पुरा अपि सर्वेषां भाषा संस्कृत-मेवासीत्। मुसलमानाः सिक्खा पारसीकाः. जैनाः, बौद्धा, ईसायिनो, आर्यसमाजिनः, हिन्दुसभावलम्बिनः, कांग्रेसीयाः, सुधारका अन्त्यजादयः संस्कृतस्य राष्ट्रभाषात्वं समर्थयन्नपि स्वसिद्धान्तपालने दक्षाः सन्ति। अत इच्छामो यत् सम्पूर्णं राष्ट्रं सांस्कृतमेव भवेत् तस्यामेव सर्वजनाः सांस्कृतो भूत्वा स्वधर्म-पालने दत्तावधानाः सन्तः भूयोऽपि भारतवर्षं समुन्नतं कुर्युः। इत्यलम्।



## शुभाऽऽशंसनम्।

साकेतमेरुगिरितः समुदीयमानो,
ध्वान्तं नितान्तमरवागुद्विषतां निरस्यन्।
कर्म्माणि संस्कृतदिवामणिरादधानः,
सन्तिष्ठतां शतसमीं कमलासनस्य ॥ १

पं० रूपनारायणशर्मा सा० व्या० आ० अयोध्या।

# किञ्चिन्निवेदनम् ।

श्रीमन्तो बृहस्पतिकल्पाः पण्डितप्रवराः, दयालवः ग्राहकानुग्राहकपाठकमहाभागाः! विदांकुर्वन्तु तत्रभवन्तो महानुभावाः यदद्य संस्कृतपत्रकार्यालयः भवतां करकमलेषु राष्ट्रभाषाङ्कस्य परिशिष्टाङ्कं समर्पयन् परमानन्दमनुभवति । एतद्विशिष्टाङ्कप्रकाशने साफल्यं प्राप्तम्, तत् सर्वं ग्राहकसहायकानां कृपयैव । विशिष्टाङ्कोऽयं बहुशीघ्रतायां प्रकाशितोऽभूत्, यतः संस्कृतपत्रसम्पादकास्तु परमखिन्ना आसन् रुजा परमियं संस्कृतभारत्याः सुमहती कृपा एव यत्पुनः नवीनसमुत्साहं प्राप्य तत्प्रकाशने कार्यालयो निरतोऽभवत् । चाञ्चल्यात्तथा शैथिल्यात् अत्यत्र बहुत्रुटयः, प्रूफशोधनमपि सुष्ठुतरं नाभवत् । परं कृपालवः स्ववस्तुं स्वयमेवाङ्गीकृत्य क्षंस्यन्ते ।

समयेऽस्मिन् संस्कृतपत्राणां परमा दुर्दशा वर्तते इति सर्वे पाठका जानन्त्येव । तत्र नास्ति ग्राहकाणां दोषः प्रत्युत मदीये विचारे तत्प्रकाशका एव दोषभाजः । यतः ते पत्रस्योपरि ईदृशं कुर्वन्ति भारं बहिःसुन्दरता दृष्ट्वा यं पत्रं कदापि वहत्येव न । अस्मिन् विषये कार्यालयः परमसतर्कोऽस्ति । स सौन्दर्येऽधिकव्ययकरणे शक्तोऽपि नास्त्येव ।

विशिष्टाङ्कस्यास्य प्रकाशने कार्यालयेन महत्कष्टमनुभूतम् । अस्मिन् करालकालेऽहमेन पत्र चालयन्मध्यतः कष्टस्य साक्षात्कार मनुभवामि । तथाऽपि यद्यनेन संस्कृतसमाजोऽल्पमपि प्रोत्साहनं गृ ह्णेत्तदाऽहं सफलश्रमः स्याम् । यतो ममाग्रेऽनेके प्रश्नाः समुपस्थिता विद्यन्ते । साप्ताहिकसंस्कृतपत्रस्य चालनं तत्प्रचारः संस्कृतभारत्याःसेवा तदनु यत्किञ्चित् कुटुम्बपोषणमेवमादयः ।

अथ मदीया साञ्जलिबद्धेयमभ्यर्थना सहृदयपाठकानामन्तिके वर्तते यत्ते सर्वे पञ्च पञ्च ग्राहकान् दत्वा सुरभारत्या सुदीर्घप्रचारकरणे मम सहायतां विदधतु । विशेषतः—साप्ताहिकसंस्कृतपत्रं शीघ्रमेव वर्तमानाकाराद् द्विगुणिताकारे प्रकाशितं भविष्यति । मूल्यमपि ३) मुद्रा भविष्यति । —कमलाकान्तत्रिपाठी, मैनेजरः ।

# संस्कृतकार्यालयस्योद्देशाः ।



( १ ) संस्कृत-भाषाया राष्ट्रभाषात्वसम्पादनाय अस्य प्रथमः समुद्देशः ।

( २ ) भारतस्य सर्वेषु प्रान्तेषु शाखा-कार्यालयानां स्थापनम् । यैः प्रधानकार्यालस्य सिद्धान्तानां प्रचारणं स्यात् ।

( ३ ) संस्कृतभाषायाः साप्ताहिकमासिकादिपत्राणां चालनं नवयुगनिर्माणकावश्यकोपादेयनवीनप्राचीनपुस्तकानां प्रकाशनञ्च ।

( ४ ) भारतस्य तत्तत्प्रान्तेषु प्रचलिताभ्यः संस्कृताद्विनिर्गतभाषेभ्यः सार्वजनिकभाषायै हिन्द्यै च सांस्कृतावलम्बनप्रदानम् ।

( ५ भारते विदेशे च वसतां विदुषां गुणपूजायै तद्योग्यतानुकूलानां प्रतिष्ठापत्राणां प्रदानं यैस्तेषू-त्साहवृद्धिस्तथा संस्कृतभाषास्नेहः सम्पद्येत ।

( ६ ) कार्यालयात् प्रतिष्ठितानां सज्जनानगुणगणगणनाय गुणिषु वर्तमानप्रचलितान्दोलनोत्थानपतनादिपरिज्ञानाय च सर्वसमूहेषु वर्षकोशप्रकाशनमल्पमूल्यलभ्यं प्रति वर्षं मासदिनतिथितारीखसहितम् ।

( ७ ) सम्पन्नशाखाभ्यः धर्म, समाज, नीति, सहित्यादिप्रचाराय बहुमतपरीक्षणां स्थापनञ्च ।

———

# संस्कृत-कार्यालयसंरक्षकाः ।



१ जगद्गुरु श्रीशङ्कराचार्य-महाराज, द्वारिका ।
२ जगद्गुरु श्रीशङ्कराचार्य-महाराज, कुम्भकोणम् ।
३ जगद्गुरु श्रीरामानुजाचार्य-महाराज, कांची ।
४ जगद्गुरु श्रीरामानुजाचार्य-महाराज, तिरुपाती ।
५ जगद्गुरु श्रीवल्लभाचार्य-महाराज, सूरत ।
६ जगद्गुरु श्रीवल्लभाचार्य-महाराज, इन्दौर ।
७ श्रीमहाराजधिराज भावनगर, काठियावाड़ ।
८ श्रीमहाराजधिराज जामनगर, काठियावाड़ ।
९ श्रीमहाराजाधिराज, भैंसरोडगढ, मेवाड ।
१० महामहोपाध्याय पं० हाथीभाई शास्त्री, जामनगर ।
११ महामहोपाध्याय पं० गोपीनाथ कविराज, काशी ।
१२ महामहोपाध्याय पं० माधवशास्त्री भाण्डारी, लाहोर
१३ श्रीस्वामी लक्ष्मीरामहाराज वैद्य, जयपुर ।
१४ श्री बाबू प्रयागनारायण एम० ए० बैंकर उन्नाव ।

# संस्कृतकार्यालयस्य सहायकाः ।

१५ श्री पं० गोवर्धनशर्मा छांगाडी वैद्य, नागपुर ।
१६ श्री पं० जीवराम कालीदास वैद्य, गोंडल, काठियावाड ।
१७ श्रीनारायण दाजीवा वाड़ेगांवकर एम० ए० जज नागपुर
१८ अ० म० व० देवभाषापरिषत् सारन, विहार ।
२१ स्वामी जयेन्द्रपुरी महाराजः, काशी ।
२२ गो० पुरुषोत्तमलालमहाराजः, कोटा ।
२३ स्वामी रघुवराचार्य जी शींगड़ामठ ।

२४ स्वामी भगवदाचार्य जी वड़ोदा।
२५ जोशी गिरजाशङ्कर जी अहमदाबाद।
२६ शास्त्री डाह्याभाई लालजीभाई अहमदाबाद।
२७ शास्त्री रेवाशङ्कर मेघजी बम्बई।
२८ शास्त्री गुलराजशर्मा वैद्य नागपुर।
२९ श्री कुलभूषण जी 'श्री' सम्पादक श्रीनगर।
३० महान्त बालकरामदास धांगध्रा।
३१ ईश्वरलाल भगत अहमदाबाद।
३२ सेठ भोगीलाल बालाभाई अहमदाबाद।
३३ सेठी लालचन्द महोदय उज्जैन।
३४ मुन्नालाल तिवारी महोदय, जमशेदपुर।
३५ वैष्णवदास जी न्यायवेदान्तकेसरी, मालसर।
३६ रणछोड़लाल काशीनाथ शर्मा, सूरत।

# विद्वद्वृत्तसूचना।

विद्वद्वृत्तस्य प्रकाशनाय कतिभिर्वर्षैः कार्यालयेन यत्यते इति नाविदितं तत्र भवताम्। तस्यैव विद्वद्वृत्तस्य प्रथमखण्डः प्रकाशितः। सम्प्रति द्वितीयखण्डस्य प्रकाशनमारब्धं भवति। अस्मिन् खण्डे २० शताब्दीपर्यन्तानां विदुषां वृत्तं समुभाषितं प्रकाशितं भविष्यति। येऽस्मिन् स्ववृत्तं प्रकाशयितुमिच्छन्ति तैराशु स्ववृत्त प्रेषणं कर्तव्यम्। अन्यथा प्रकाशितेऽस्मिन् ग्रन्थे ते पश्चात्तपिष्यन्त्येव। अद्यावधि बहूनां देशस्य प्रमुखविदुषां वृत्तं कार्यालये समागतम्। वर्तते आशाऽस्ति नाऽन्येऽपि विलम्बमाचरिष्यन्ति। अनेन क्रमेण संस्कृतसाहित्यस्यैकस्याङ्गस्य पूर्तिर्भविष्यति, तथा विदुषां कीर्तिश्चिरस्थायिनी भविष्यति।

---

